(१) श्यावी *। श्यैङ् गतौ ( भू० आ० )'। 'इण्शीभ्यां वन् (उ० १, १५० )'—इति विधीयमानो वन्प्रत्ययो बाहुलकात् भवति। श्यायते गच्छति स्वाश्रयमिति। श्यावो धूसरारुणो वर्णः; तमः सम्ध्यादिकम्मात् श्याववर्णा रात्रिः श्यावी, 'अन्यतो ङीष् ( ४, १, ४० )। "श्यावी च यदरुषी च स्वसारौ (ऋ० सं० २, २, १०, १ )—इति निगमः॥

(२) क्षपा। 'क्षप्यते सूर्यचारेण क्षपा'—इति क्षीरस्वामी। 'क्षप् प्रेरणे', 'क्षपि क्षान्त्याम्'-इति कथादिषु पठितोऽपि बहुलमेतन्निदर्शनमित्यस्योदाहरणत्वेन धातुवृत्तौ पठ्यते। 'क्षपिः क्षपयन्ति क्षान्त्यां प्रेरणे क्षपयेत्'-इति दैवम्। 'क्षपः क्षपयतेर्निशा'—इति च माधवः। क्षपा-शब्दोऽन्तोदात्तो रात्रिनाम, आद्युदात्तस्तु क्षपणवचनः। "नृणां नर्यो नृतमः क्षपावान् ( ऋ० सं० ७, ७, २२, १)"—इति निगमः। "त्वमिदसि क्षपावान् (ऋ० सं ६, ५, ११, २ )"—इति क्षपणवचनः॥

(३) शर्वरी। 'शॄ हिंसायाम् (क्र्या० प०)'। 'कृगॄशॄवृञ्चतिभ्यः ष्वरच् (उ० २, ११४)'। टिड्ढात् (४, १, १५) ङीप्। शृणाति चेष्टाम्, रात्रौ हि स्व-स्व-व्यापारेभ्यः उपरमन्ते प्राणिनः; शीर्यन्ते वास्यां प्राणिनो नक्तञ्चरैः। "अति ष्यन्दन्ति शर्वरीः (ऋ० सं० ४, ३, ८, ३ )"—इति निगमः॥

(४) अक्तुः †। 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु (रु० प०)'। 'पः कित्च (उ० १, ६८)'—इति विधीयमानः तु-प्रत्ययः कित्त्वञ्च

* १० १६।                    † निघ० ३, २८, १२, २१ ।

बाहुलकाद् भवति । 'पाष्णिनृभ्यः क्नुः'—इति क्नुरिति श्रीभोज-देवः । 'अनिदिताम् ( ६, ४, २४ )' - इति न-लोपः । अज्यते सिच्यतेऽस्यामवश्यायेन जगत् , गच्छति वा प्रतिदिनम् अक्तुः । "विश्वामक्तोरुषसः पूर्वहूतौ ( ऋ० सं० ५, ४, ६, २ )"—इति निगमः ॥

(५) ऊर्म्या । 'ऊर्णुञ् आच्छादने (अदा० उ०)' । 'अर्त्तेर्णि-र्णिलोपश्च ( उ० १, २८ ? )'—इति मि-प्रत्ययः' इति इति केचित् । 'अर्त्तेरूच ( उ० ४, ४४ )'—इति मि-प्रत्ययः'—इति कमलनयनः । ऊर्मिः तमः-सङ्घातः, आच्छादकत्वात् लोकस्य । तमर्हति ( ५, १, ६३ )', 'छन्दसि च ( ५, १, ६७ )'—इति यत् प्रत्ययः । "इन्द्राय नक्तमूर्म्याः सुवाचः (ऋ० सं० ६, ६, १२, १)" —इति निगमः ॥

(६) राम्या । 'रमु क्रीड़ायाम् (भू० आ०)' । अन्तर्णीतण्य-र्थात् प्रेपार्थविशिष्टादस्मात् 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति बहुलवचनात् 'पोरदुपधात् (३, १, ९८)' - इति यतं बाधित्वा 'ऋहलोर्ण्यत् (३, १, १२४)' भवति, 'अचोञ्णिति (७, २, ११५)' —इति वृद्धिः । प्ररमयति भूतानि नक्तचराणि, उपरमयति दिवाचराणि स्वव्यापारेभ्यः । माधवस्तु सर्वभूतानि रमयति । तथाच कौषीतकिः—'ये वै के चानन्ता अत्रे पाने मिथुने रात्रा एव ते सन्तता अवच्छिन्नाः क्रियन्ते, तेषां रात्रिः कारोतरः'—इति । 'अघोरामः सावित्रः (य० वा० सं० २९, ५८)'—इत्यत्र 'श्वेतः कृष्णोदरः'—इति भाष्यम् । 'रामयारी सितेऽसिते'—इति

वैजयन्ती । तस्माद्रामशब्दः कृष्णपर्यायः * । स्वाश्रये रमते रामः 'ज्वलिति कसन्तेभ्यो णः (३, १, १४०) । 'तदर्हति (५, १, ६३)', 'छन्दसि च (५, १, ६७)'—इति यत् । 'अहश्च कृष्णमहरर्जुनं च (ऋ० सं० ४, ५, ११, १)'—इति श्रुतिः * * * । यद्वा ; रमणं रामः । भावे घञ् (३, ३, १८) । स्त्रीभिः सह क्रीडा रामः । 'तत्र साधुः (४, ४, ९८)'—इति यत् । "सद्‌ध्वान उषसो राम्या अतु (ऋ० सं० २, ५, २१,३)"—इति, "आविर्वेनर् चक्षणोद्राम्याणाम् (ऋ० सं० ३,२,१५, ३)"—इति च निगमौ ॥

(७) यम्या । 'यम उपरमे (भू० प०) । 'अघ्न्यादयश्च (उ० ४, १०८)'—इति यक्-प्रत्ययान्तो निपात्यते । उपरमयति प्राणिनां चेष्टाः । अथवा 'गदमदचरयमश्चानुपसर्गे (३, १, १००)'—इति यत् कर्त्तरि बाहुलकेन । यद्वा ; यमनीया उपरमयितव्या आदित्यचारिणेति यथाप्राप्तो यत् निगमोऽन्वेषणीयः † ॥

(८) नम्या । (९) दोषा । (१०) नक्ता । (११) तमः । (१२) रजः । (१३) असिक्नी ‡ ॥

---

* अतएव "रामभेसात् (ऋ० सं० ७, ३, ११, २)"—इति व्याख्यावसरे उक्तं सायणेन—'राम कृष्ण भासरं तमोऽभवसात्'—इति ।

† ऋक्संहितायान्तु अन्यत्रापि दृश्यते 'यम्या'—इति । तत्रैव (१, १, २०, ११) 'यम्या यमस्य मिथुनभूते अहश्च रात्रिश्चेति'—इति, अपरत्र (८, २ १,५) 'यम्या यम्ये नियमनीये युग्मभूते वा'—इति, अन्यत्र 'यम्या युगलभूते'—इति व्याख्यातवान् सायणः ।

(९) निघ० १, १६ ।

(१०) निघ० ८, १० ।

(११) निघ० ९, १६ ।

(१२) प० ३, ३० ॥ १ । निघ० २, २१ १४, ८ १०, ३४ १२, ७ ;—११ ।

(१३) निघ० ९ २६ ।

‡ अयतेमानि पदानि व्याख्यातानि भाष्ये दृश्यन्ते ।

(१४) पयस्वती* । पयोऽस्या अस्तीति । 'अस्मायामेधास्रजो विनिः (५, २, १२१)' । 'बहुलं छन्दसि (५, २, १२२)'—इत्युत्तो मतुपि वत्वे च 'उगितश्च (४, १, ६)'—इति ङीप् । 'तसौ मत्वर्थे ( १, ४, १९ )'—इति भ-सञ्ज्ञाविधानात् रुत्वं न भवति । निगमोऽन्वेषणीयः ॥

(१५) तमस्वती । ताम्यन्त्यनेनेति (दि० प०) तमोऽन्धकारं तेन तद्वती । पूर्ववत् प्रक्रिया । निगमोऽन्वेषणीयः ॥

(१६) घृताची । 'घृ क्षरणदीप्त्योः (जु० प०)', 'घृ सेचने (भू० प०)' । 'अग्निहृपिभ्यः क्तः (उ० ३, ८९)' । सेचयत्यनेन भूमिं पर्जन्यः, क्षरति मेघात् दीप्तं वा स्वेन तेजसा दैवतत्वादिति घृतमक्षायमग्राह्यलक्षणं जलम् , तदञ्चति । 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ३, २, ५९)'—इति अञ्चतेर्गत्यर्थात् (भू० प०) क्विनि 'अनिदिताम् (६, ४, २४ )'—इति न-लोपे, 'अचः (६, ४, १३८ '—इत्यकारलोपे, 'चौ (६, ३, १३८)'—इति दीर्घे, 'अञ्चतेश्चोपसङ्ख्यानम् (४, १, ६ वा०)'—इति ङीप्, घृताचीति। निगमोऽन्वेषणीयः ॥

(१७) शिरिणा । शीङ् ( अदा० आ० ) अन्तर्णीतण्यर्थात् 'बहुलमन्यत्रापि ( उ० २, ४६ )'—इति इनच्-प्रत्यये रुडागमो धातोर्ह्रस्वश्च । शाययति प्राणिनः शिरिणा । शाययेन्निशेति माधवः । "शिरिणायां चिदक्तुना महोभिः (ऋ० सं० २, ६, २, ३)" —इति निगमः ॥

---

* प० १९। निरु० ५, २।

(१८) मोकी। 'मुच्लृ मोचने (तु० उ०)'। 'इन् सर्वधातुभ्यः (उ० ४, ११४)'—इति इनि बाहुलकात् कुत्वम्। 'कृदिकारादक्तिनः (४, १, ४५ वा०)'—इति ङीप्। मुच्यत्यस्यामवस्थायं मध्यम, मुञ्चन्ति प्राणिनः स्वस्वव्यापारात् मोक्। तदस्याअस्तीति 'छन्दसीवनिपौ च (५, २, १२२ वा०)'—इति मत्वर्थीय ईकार-प्रत्ययः, व्यत्ययेन (३, १, ८५) हल्ङ्यादिलोपः (६, १, ६८)। "ऋतुव्रतं सवितुर्मोक्यागात् (ऋ० सं० २, ८, २, ६)"—इति निगमः॥

(१९) शोकी। 'शुच् शोके (भू० प०)', ज्वलति-कर्मा (निघ० १, १७) वा। पूर्ववत् प्रक्रिया। शोचन्त्यस्यां विरहिणः, शोकस्तेजोऽस्या अस्तीति वा, 'अग्निना वै तेजसा रात्रिस्तेजस्वती'—इति ब्राह्मणम्। निगमोऽन्वेषणीयः॥

(२०) ऊधः *। रात्रिनाम-निर्वचनार्थप्रसिद्धं तावदुच्यते। गोरूध उद्धततरं भवति प्रसवकाले अङ्गान्तरेभ्य उच्छ्रिततरं भवति। यद्वा; उपोन्नद्धमुपरि सृष्टमूर्द्धमिव केनचित्। तत् क्लेदं रसानुप्रदानसामान्याद् रात्रिमूध उच्यते। यद्वा; 'उन्दी क्लेदने (रु० प०)'। असुनि (उ० ४, १८४)', बाहुलकान्नलोपे दकारस्य धत्वे दीर्घे च रूपम्। उनत्त्यवश्यायेन भूतानि। 'उनत्त्यूधः'—इति क्षीरस्वामी। "यो अंसो अंस उत वा य ऊधनि (ऋ० सं० ४, २, ३, ३)"—"ऊधर्न नग्ना जरन्ते (ऋ० सं ५, ७, १९, १२)"

* निरु० ६, १९।

—इति च निगमौ। आधमीत्यत्र छान्दसत्वादनङ् ( ५, ४, १२१ ;—१४२ )॥

(२१) पयः *। व्याख्यातं पयस्वतीत्यत्र, मत्वर्थीयस्य लुक्। निगमोऽन्वेषणीयः॥

(२२) हिमा। 'हन्तेर्हि च (उ० १, १४४)'—इति मक्-प्रत्ययो हिरादेशश्च। हन्ति (अदा० प०) पद्मानीति हिमम्, अर्श-आदित्वादच् ( ५, २, १२७ )। "शं भानुना शं हिमा शं घृणेन ( ऋ० सं० ७, ८, १२, ४ )"—इति निगमः॥

(२३) वस्रौ। 'वस आच्छादने (अदा० आ०)'। 'शृस्वृस्निहित्रप्यसिवसि (उ० १, १०)'—इति उ-प्रत्ययः। वस्ते आच्छादयते लोकमिति अवश्यायभ्रमो वा, तद्वतो वसुः। 'छन्दसीवनिपौ च ( ५, २, १२२ वा० )'—इति ईकारः, 'हयादीनाञ्च ( ६, १, १०२ )'—इत्याद्युदात्तत्वम्। यद्वा ; प्रशस्त-वचनाद् वसुशब्दात् 'वोतोगुणवचनात् (४, १, ४४)'—इति ङीष्, सर्वभूत-रमणत्वाद्रात्र्याः प्राशस्त्यम्। निगमोऽन्वेषणीयः † ॥

इति त्रयोविंशती रात्रिनामानि ॥ ७ ॥

---

* प० १२. २, ७। निरु० २, ६।

† एतस्य निगमोऽस्य भवितुमर्हति—'वस्रो हु मं करिष्ये'—इति (ऋ० सं० ६, ६, २, ६ )। तत्र 'वस्रोवु पापनयनकारण सूर्यतु'—इति सायणीय-व्याख्या, परं 'वस्रो। हुं'—इति पदत्वविरोधादुपेक्षैव वा। एवमुपेक्षिते एतत्वादिके सर्वत्रैव निगमः दृश्यतः यद्यपि चौयम्।

विभावरी[१]। सूनरी[२]। भास्वती[३]। ओदती[४]। चित्रामघा[५]। अर्जुनी[६]। वाजिनी[७]। वाजिनीवती[८]। सुम्नावरी[९]। अहना[१०]। द्योतना[११]। श्वित्या[१२]। अरुषी[१३]। सूनृता[१४]। सूनृतावती[१५]। सूनृतावरी[१६]। इति षोडशोषोनामानि * ॥ ८ ॥

(१) विभावरी। 'भा दीप्तौ (अदा० प०)' विपूर्वः। 'आतो-मनिन्क्वनिब्वनिपश्च (३, २, ७४)'—इति वनिप्। 'वनो र च (४, १, ७)'—इति ङीब्रेफौ। विशेषेण भाति दीप्यते आदित्य-किरणसम्बन्धात्। "आपप्रुषी विभावरि (ऋ० सं० १, ८, ३, ६)"—इति निगमः॥

(२) सूनरी। शोभना नरा अस्यां सन्ति, मत्वर्थीय ईकारः, व्यत्ययेन इलुप्यादिलोपः। अथवा बहुव्रीहिः, पिप्पल्यादेराकृति-गणत्वादीकारः। नराणां प्रसन्नचित्तत्वेन धर्मादिविशिष्टतया तदानीं शोभनत्वम्। तथाच महाकविः—'पश्चिमाद् यामिनी-यामात् प्रसादमिव चेतना'—इति। यद्वा; सूनरी शोभनं नयति कालम्। 'नॄ नये (क्र्या० प०)', सुपूर्वात् 'अच इः (उ० ४, १३४)', 'कृदिकारादक्तिनः (४, १, ४५ वा०)'—इति ङीष्। सूनरी सुधना। यद्वा; 'नृभिर्देवैः समन्विता'—इति माधवः।

---

(८) "वाजिनिवती" ख, ग। (१२) "अरुषी" ख, ग। (१४) 'सूनृत'—इति ग।
(१५) "सूनृतावति" ख। * "उषसः" ग।

'अन्येषामपि दृश्यते (६, ३, १३७)'—इति दीर्घः। व्यत्ययेनाव-धारणान्नावष्टभ्यते। "ज्योतिष्कृणोति सूनरी' (ऋ० सं० ५, ६, १, १ )"—इति निगमः॥

(३) भास्वती *। 'भासृ दीप्तौ (भ्वा० आ०)', क्विप्। भासत-इति भासः प्रकाशः। भासा, मतुपो भास्वती 'तसौ मत्वर्थे ( १, ४, १८ )'—इति भ-सञ्ज्ञया पदत्वाभावे रुत्वं न भवति भा-स्वती। "भास्वती नेत्री सूनृतानाम् (ऋ० सं० १, ८, १, ४)"—इति निगमः॥

(४) चोदती। 'चन्दी ह्लादने (भ्वा० प०)'। चन्देर्लटः शतरि 'छन्दस्युभयथा ( ३, ४, ११७ )'—इति शतुरार्द्धधातुकत्वेन विक-रणाभावः, सार्वधातुकत्वात् 'सार्वधातुकमपित् ( १, २, ४ )'—इति ङिद्वद्भावात् 'अनिदिताम् (६, ४, २४)'—इति न-लोपः, व्यत्ययेन गुणः, 'उगितश्च ( ४, १, ६ )'—इति ङीप्। उणत्ययव्यत्ययेन चोदती। * * *। "पदं न वेत्योदती ( १, ४, ४, १ )"—इति निगमः॥

(५) चित्रामघा। 'चित्र् चयने (स्वा० उ०)'। 'अमिचि-मिमिदिशसिभ्यः क्तः (उ० ४, १५८)'—इति क्त-प्रत्ययः, चित्रम्। मंहतिर्दानकर्मा (निघ० ३, २०), घञर्थे क विधानमित्यत्र परि-गणनस्योपलक्षणार्थत्वात् क-प्रत्यये 'अनिदिताम् (६, ४, २४)'—इति न लोपः, पृषोदरादित्वात् (६, ३, १०९) घत्वम्। मह्यते दीयतेऽर्थिभ्यः इति मघं धनम् चित्रमाश्चर्यभूतं धनं यस्या इति

---

* प० १२।

चित्रामघा, 'अन्येषामपि दृश्यते (६, ३, १३७)'—दीर्घः। "वाजिनीवती सूर्यस्य योषा चित्रामघा (ऋ० सं० ५, ५, २२, ५)"—इति निगमः॥

(६) अर्जुनी *। 'अर्ज षर्ज अर्जने (चु० प०)'। अर्जेर्णिलुकि उनन्-प्रत्ययः (उ० ३, ५५), अर्जयति। यद्वा; 'अर्ज गतिस्थानार्जनेषु (भु० प०)'। बाहुलकादुनन्। गम्यते तदर्थिभिः तिष्ठति स्थाप्यते। अर्जुनमिति रूपनाम (निघ० ३, ७), तच्चादित्यरश्मिसम्बन्धात् श्वेतम्, अर्जुनी श्वेता, 'अन्यतो ङीष् (४, १, ४०)'। यद्वा; अर्जुन्यो गावः ता अस्याः सन्ति वाहनत्वेन मत्वर्थीय ईकारः, व्यत्ययेन इन्प्रत्ययादिलोपः; "या गोमतीरुषसः सर्ववीरा (ऋ० सं० १, ८, ४, ७)"—इति श्रुतिः। "द्विपाच्चतुष्पादर्जुनि (ऋ० सं० १, ४, ६, ३)"—इति निगमः॥

(७) वाजिनी †। वाज इत्यन्ननाम (निघ० २, ७), वाजो हविर्लक्षणमन्नमस्या अस्ति, 'अत इनिठनौ (५, २, ११५)'—'ऋन्नेभ्यो ङीप् (४, १, ५)'। यजमानेभ्यो यानि देयान्यन्नानि तैस्तद्वती वा। "वायविन्द्रश्च चेतथः सुतानां वाजिनीवसू (ऋ० सं० १, १, ३, ५)"—इति निगमः॥

(८) वाजिनीवती ‡। वाजो बलं वेगो वा तेन तद्वती वाजिनी, कामी उषसः स्वभूता तेन तद्वती वाजिनीवती। यद्वा; वाजो

---

* निघ० १, १२। प० १, ७।

† प० १, १३। ६, ६। निघ० २, २८। ३, २०, ३०। १०, २८,—११, १२, १३।

‡ निघ० १, ८। ११, २६। १२, ६।

हविर्लक्षणम् यत्रायस्या अस्तीति वाजिनी यागसन्ततिः ; तद्वती वाजिनीवती । यद्वा ; वाजमन्नं तद्वती वा वाजिनी, कार्यो अवयवभूतेनान्नेन तद्वती अन्न संहतिः, तया अन्नसंहत्या तद्वती वाजिनीवती । यद्वा ; द्वावेतौ मत्वर्थीयौ तयोरेकार्थेणातितरो-मत्वर्थीयः अतिशयेनान्नवतीत्यर्थः 'वाजिनीवतीत्विया हि सर्वेऽन्नं लभन्ते'—इति माधवः । 'सञ्ज्ञायाम् ( ८, २, ११ )'—इति वा 'छन्दसीरः ( ८, २, १५ )' —इति वा मतुपोवत्वम् । "व्यश्वेभ्यः सुभगे वाजिनीवति ऋ० सं० ६, २, २२, ३)"—"अस्मभ्यं वाजिनीवति ( ऋ० सं० ३, ८, ७, ४ )"—इति निगमौ ॥

(९) सुम्नावरी । सुपूर्वात् 'म्ना माने (अदा० प०)'—इत्यस्मात् 'उपसर्गे च सञ्ज्ञायाम् (३, २,९९)'—इति अनेविधीयमानो ड-प्रत्ययो बाहुलकाद् भवति । सुष्ठु आम्नायते अभ्यस्यते इति सुम्नं सुखं, तद्धि सर्वैः सर्वदा ममेदं भूयादित्यभ्यासेन प्रार्थ्यते । तथाच-'सुखं सुम्नातेः, प्रजा वै पशवः सुम्नम्'—इति माधवः । तदस्या अस्ति । 'छन्दसीवनिपौ च (५, २, १२२ वा०)'—'वनो र च '४, १, ७)'—इति ङीप्, 'अन्येषामपि दृश्यते (६,३, १३७)' —इति दीर्घः । सुम्नावतीत्यर्थः । "सुम्नावरी सूनृता ईरयन्ती ( ऋ० सं० १, ८, ३, २)"—इति निगमः ॥

(१०) अह्ना । 'अहि गतौ', भ्वादिरात्मनेपदी ; 'अश व्याप्तौ', स्वादिः परस्मैपदी । 'युच् बहुलम् (उ० २, ७४)'—इति युच्-प्रत्ययः, बहुलवचनात् पूर्ववत् नकारलोपः । अहनो गच्छत्यावायै प्रतिदिनं स्वयं गच्छतीति वा । व्याप्नोति स्वभासा ;लोकं

व्याप्यते वादित्यरश्मिभिः । "रुद्रं रुद्रेष्वरुहना यात्यच्छा (ऋ० सं० २, १, ४, ४)"—इति निगमः ॥

(११) द्योतना । अस्मात् 'द्युत दीप्तौ (भू० धा०)'—इत्यस्मात् 'ण्यासश्रन्थो युच् (३, ३, १०७)'—इति बाहुलकात् कर्त्तरि युच्, 'णेरनिटि (६, ४, ५१)'—इति णि-लोपः । द्योतयति सर्वान् पदार्थान् प्रकाशकत्वात् । यद्वा; केवलाद् 'अनुदात्तेतश्च हलादेः (३, २, १४९)'—इति युच् । द्योतते स्वयं द्योतना । "सिषक्ति सूनृता द्योतना शश्वदागात् (ऋ० सं० २, १, ४, ४)"—इति निगमः ॥

(१२) श्वैत्या * । 'श्विता वर्णे (भू० धा०)' । अघ्न्यादित्वात् (उ० ४, १०८) यक् द्रष्टव्यः । श्वैतते श्वैत्या । 'श्विता वर्णे' इति वर्णसामान्यं सामर्थ्यात् शुक्लवर्णेऽपि श्वैत्ये पर्यवसितं द्रष्टव्यम् उषसि तथा दर्शनात् । "रुशद्वत्सा रुशती श्वैत्यागात् (ऋ० सं० १, ८, १, २)"—इति निगमः ॥

(१३) अरुषी † । 'ऋ सृ गतौ' जुहोत्यादिः (प०), 'ऋ गतिप्रापणयोः' भ्वादिः (प०) । 'ऋतनिभ्यामुषन् (उ० ४, ७४) ‡', षिद्गौरादेराकृतिगणत्वादीकारः § । इयर्त्ति गच्छति वादित्योदयेनास्तं प्रतिदिनम् प्रापयति वा स्तोतॄन् ऐश्वर्यादि । यद्वा; आङ्पूर्वात् 'रुच दीप्तौ (भू० धा०)'—इत्यस्मात् बाहुल-

---

* निघ० २, २० । † ऋ० १, ७ । निघ० ११, ७ ।

‡ 'ऋतनिभ्यामुषन्'—इति मुद्रितपाठः । एवमाकरेष्वपि [illegible] पाठम् । 'अर्त्तिस्तुसु [illegible] (उ० १, १४०)—इत्यनेन 'अरुस्'—इति [illegible] [illegible]।

§ षिद्गौरादिभ्यश्च ( ४, १, ४१ ), ईकारः [illegible] ।

कात् ङुपच् , टिलोपः, शाङ्गेष्ट्रवय ; आरोचते अरुषी । यद्वा ; अरुषमिति रूपनाम (निघ० ३, ७), सामर्थ्याद्व शुक्लविषयम् , शुक्लवर्णा अरुषी । 'अन्यतो ङीष् ( ४, १, ४० )' । "अश्वेव चित्रारुषी ( ऋ० सं० ३, ८, २, २ )"—इति च निगमः ॥

(१४) सूनृता *। (१५) सूनृतावती। (१६) सूनृतावरी। सुष्ठु ऊन्यते अप्रियैरिति सून्। सुपूर्वात् 'ऊन परिहाणे (दि० भा०)'—इत्यस्मात् क्विप्। ऋतमिति सत्यनाम ( निघ० ४, १८)। सूनं तदृतञ्च सूनृतम् , पृषोदरादित्वात् (६, ३, १०८) न-लोपाभावः। प्रियञ्च सत्यञ्च। पूर्वे मत्वर्थीयोऽकारः, उत्तरत्र मतुप्, अन्यत्र 'छन्दसीवनिपौ च ( ५,२, १२२ वा० )'—इति वनिप् , मतौ वत्वरत्वौ, 'अन्येषामपि दृश्यते ( ६, ३, १३७ )'—इति दीर्घः। यद्वा ; प्रियसत्यरूपा वाचः सूनृता उच्यन्ते। "सुम्नावरी सूनृता ईरयन्ती (ऋ० सं० १, ८, ३, २)"—"उदीरय प्रति मा सूनृता उषः ( ऋ० सं० १, ४, ३, २ )"—इत्यादि दर्शनात् तद्वत्यः सूनृतादयः। दीर्घो मापेक्षणीयः। यद्वा ; सूनृतेत्यन्ननामसु ( निघ० २, ७ ) पाठादेवम्। सूनृता धननाम ( ? ) माधवपक्षेण अन्नवत्यो धनवत्यो वा सूनृतादयः। "रेवत् स्तोत्रे सूनृते जारयन्ती ( ऋ० सं० २, १, ८, ५ )"—"रेवदस्मे व्युच्छ सूनृतावति (ऋ० सं० १, ६, २६, ४)"—"चिकित्वित् सूनृतावरि (ऋ० सं० ३. ८, ३, ४)"—इति च निगमाः क्रमेण ॥

इति षोडशोषोनामानि ॥ ८ ॥

* च० १. ७।

वस्तोः(१) । द्यौः(२) । भानुः(३) । वासरम्(४) । स्वसराणि(५) । घ्रंसः(६) । घर्मः(७) । घृणः(८) । दिनम्(९) । दिवा(१०) । दिवेदिवे(११) । द्यविद्यवि(१२) । इति द्वादशाहर्नामानि * ॥ ९ ॥

(१) वस्तोः † । अत्र स्कन्दस्वामी—'वस्तोरितीदमपीदं नाम, न विभक्त्यन्तरम्, "दोषावस्तोर्हविष्मती घृताची (ऋ० सं० ५, १, २४, १)"—"दोषावस्तोर्वहीयसः प्रपित्वे (ऋ० सं० १, ७, १८, १)"—इति समस्तस्यापि दर्शनात्। वस्ते ज्योतिरिति वस्तोः, द्योततइति द्यौः। एवं सर्वत्र'—इति। वस्ते (अदा० आ०) आच्छादयतीति ज्योतिः। व्यत्ययेन कर्त्तरि तोसुन् (३, ४, १३)। "कुह स्विद्दोषा कुह वस्तोरश्विना (ऋ० सं० ७, ८, १८, २)"—इति निगमः। कुह क्वेति सप्तमीसामानाधिकरण्यात् दोषावस्तोरित्यपि सप्तम्या एवाव्ययलुगध्यवसितः ॥

(२) द्यौः ‡ । 'द्युत दीप्तौ (भ्वा० आ०)', बाहुलकात् डो-प्रत्ययः (उ० २, ६४)। द्योतते किरणसम्बन्धात्। यद्वा; 'द्यु

(२) "द्यु"—कातिरिक्तेषु सर्वेष्वेव टीकाकृता चाप्यनेन स्वीकृतम्।

(८) "घृणि" C D F. ग, क। प० १७ २, ११।

(१२) "द्यविद्यवि"—इति क।

* "द्वादश" ग।

† निरु० ४, १४ ८, ९।

‡ निरु० ३ ६ २, १०. ६ १ ८, ११ १०, ११ ,—१०।

अभिगमने (भ्वा० प०)' ; 'द्युगमिभ्यां डोः'—इति श्रीभोजदेवः। अभिगच्छत्यस्मिन् स्वं स्वमभिमतप्रदेशं प्राणिनः। 'गोतोणित् (७, १, ८०)'—इति वृद्धिः। "मर्त्यं भारोधने दिवः (१, ७, २२, १)"—इति निगमः॥ केचित् द्युरिति पठन्ति। तदा 'डिव' —इत्यधिकारे 'द्युद्रुभ्यां च'—इति भोजसूत्रेण ड-प्रत्ययः। 'द्यु अभिगमने ( भ्वा० प० )' द्युतेरेव वा 'भय्वादयश्च (उ० ५, ३०)' —इति डुन्-प्रत्ययान्तो निपातितो द्रष्टव्यः। उभयत्र पूर्वोक्त एवार्थः। "द्युभिरक्तुभिः परिपातमस्मान् (ऋ० सं० १, ७, ३०, ५)"—"त्वमग्ने द्युभिः स्त्वमाशुशुक्षणिः (ऋ० सं० २, ५, १७,१)" —इति निगमौ॥

(३) भानुः। 'भा दीप्तौ (भ्वा० प०)' ; 'भादाभ्यां नुः (उ० ३, ३१)। भात्यादित्याधिकरणसम्बन्धादेव। "उद्देया उषसो भानुरर्त्त ( ऋ० सं० ३, ४, १५, २ )"—इति निगमः। रश्मि-र्भानुरिति माधवोऽत्रमहर्भवितुमर्हति॥

(४) वासरम् *। 'वस निवासे ( भ्वा० प० )' ; णिजन्तः एषोऽपि वि-पूर्वस्तार्थे वर्त्तते। 'चर्त्तिकमिभ्रमिदिविवर्सिवा-सिभ्यचित् (उ० ३, १२८)'—इत्यरच् प्रत्ययः। विवासयति अप-नयति शीतादिकम्। यद्वा ; वसेः स्वार्थे णिचि अधिकरणेऽरच्। वसत्यस्मिन् सुखेनेति वासरम्। यद्वा ; 'वास दीप्तौ (दि०चा०)' ; पूर्वस्मादेव सूत्रादरच् दीप्यते वासरम्। यद्वा ; विपूर्वात् सर्त्तेर्गत्यर्थात् पचाद्यचि वीत्यस्येकारस्याकारः पृषोदरादित्वात् ; दिविधं

---

* निघ० १, ९।

सराणि सृतानि विस्तीर्णानीत्यर्थः। 'वासराणि वैसराणि (निरु० ४, ७)'—इति भाष्ये स्कन्दस्वामी—'वैसरशब्दस्यायमेकारस्याकारः। साहश्येन चात्र वर्त्तते। यथा वेसरो निष्पादकगताभ्यां विरुद्धाभ्यां जातिभ्यामश्वत्वजात्या गर्द्दभत्वजात्या सम्बद्ध। एवं यावत् द्वौ निष्पादकौ पूर्वभागापरभागौ तद्गताभ्यां विरुद्धाभ्यां शीतोष्णाभ्यां पूर्वभागगतेन शीतेनापरभागगतेन चोष्णेन सम्बन्धाद् वैसरसहशत्वाद् वासरम्'—इति। "अहानीव सूर्यो वासराणि (ऋ० सं० ६, ४, १२, २)"। अहानीत्यनेन पौनरुक्त्याद्न्योऽपि निगमोऽन्वेषणीयः॥

५) स्वसराणि *। स्वशब्दे उपपदे सर्त्तेर्गत्यर्थात् (भू० प०) पचाद्यच् (३, १, १३४)। स्वेन आत्मनैव गच्छन्ति। अपि च, स्वरित्यादित्यनाम (निरु० २, १४)। सर्त्तेः 'पुंसि सञ्ज्ञायां घः प्रायेण (३, ३, ११८)'। अन्तर्णीतण्यर्थश्चात्र सर्त्तिः। स्वरित्येतस्य रेफलोपः पृषोदरादित्वात् (६, ३, १०९)। आदित्येन सार्यते। स हि स्वोदयास्तमयाभ्यां तानि गमयति। यद्वा; सुपूर्वात् 'असु क्षेपणे (दि० प०)'—इत्यस्मात् अदरादित्वादरन् (उ० ५, ४२) द्रष्टव्यः। सुठु असस्ते क्षिप्यन्ते सूर्येण स्वोदयास्तमयाभ्याम्, तथाच 'स्वसरदहेत्युपक्रष्टात्'—इति माधवः। "उस्राइव स्वसराणि (ऋ० सं० १, १, ६, २)" इति निगमः॥

(६) घ्रंसः †। 'ग्रस उपादाने (का० उ०)' अस्मात् घञि पृषोदरादित्वात् (६, ३, १०९) गकारस्य घकारस्य घकारो

* प० १, ३ ४, २। निरु० ५, ४। † निरु० ६, ४ ;—१२,—१६।

नुगागमः हकारस्य घकारः। घ्नन्त्येऽस्मिन् रसा घर्मच्छाया धादित्येन। "यो अस्मै घ्रंस उत वा य ऊधनि (ऋ० सं० ४, २, ३, २)"—इति निगमः ॥

(७) घर्मः *। 'घृ क्षरणदीप्त्योः (जु० प० ?)'; 'घर्मः (उ० १, १४६ )'—इति म-प्रत्ययान्तो निपातः। जिघर्त्ति दीप्यते रश्मिसम्बन्धात्। निगमोऽन्वेषणीयः ॥

(८) घृणः। जिघर्त्ति (जु० प० ?) 'इणसिञ्जिदीङुष्यविभ्यो नक् (उ० ३, २)'—इतीणादिभ्यो विधीयमानो नक्-प्रत्ययो बाहुलकाद् भवति। पूर्ववदर्थः। "घृणा वयोऽवयासः परि त्मन् ( ऋ० सं० ३, ७, १८, ६)"—इति निगमः † । * * *॥

(९) दिनम्। 'दो अवखण्डने (दि० प०)'; पूर्ववदौणादिके नक्-प्रत्यये बाहुलकात् (उ० २, ४६); 'द्यतिस्यतिमास्थाम् (७, ४, ४० )'—इतीत्वम्। द्यतितमः दिनम्। "अधा सूरिभ्यः सुदिना व्युच्छान् ( ऋ० सं० ५, २, २८, १)"—इति निगमः ॥

(१०) दिवा ‡। द्योतनात्। अव्ययमिदम्। "दिवा भिपित्वेऽवसा गमिष्ठा ( ऋ० सं० ४, ४, १०, २)"—"दिवा नक्त मर्धसा मन्तमिम ( ऋ० सं० ४, २, १७, १)"—इति निगमौ ॥

(११) दिवेदिवे §। 'दिवु क्रीडाविजिगीषाव्यवहारद्युति-

---

* प० १, १०। निरु० ६, ११ ११, ४२,—४१।

† इभिरिति पाठान्तरपक्षेऽप्ययं निगमः—'घृणौ वञ्चायाम्'—इति 'घृणे'व च्छायां यथा [illegible]—इति तथोक्तं [illegible] २. ७, १०, १।

‡ [illegible]   § निरु० ७, १८।

सुतिमोदमदस्वप्नकान्तिगतिषु (दि० प०)। 'दिवेर्डिविः ( १ – )'
— इत्यधिकरणे डिविप्रत्ययः। दिश्यन्तेऽस्मिन्निति द्यौः। दिव्-
शब्दात् परस्य सप्तम्या एकवचनस्य 'सुपांसुलुक् ( ७, १, ३९ )'—
इत्यादिना शे आदेशः, प्रगृह्यत्वं (१, १, १३ ) तु व्यत्ययेनात्र न
भवति। चतुर्थी वा व्यत्ययेन। ततो वीप्सादिः ( ८, १, ४ ),
दिवसेदिवसे इत्यर्थः। यथादृष्टं पठितमिदं नाम। "उपत्वाग्ने
दिवेदिवे (१, १, २, २)"—"दिवेदिवे सामम्मर्थ्यं सावीः (ऋ०
सं० ५, १, १५, ६)"—इति च निगमौ॥

(१२) द्यविद्यवि। द्योशब्दो व्याख्यात (२)। सप्तम्येकवचनं,
वीप्सादि पूर्ववत्, "मिमीमसि द्यविद्यवि ( ऋ० सं० १, २, १६,
१)"—इति निगमः॥

इति द्वादशाहर्नामानि॥ ८॥

अद्रिः(१)। ग्रावा(२)। गोत्रः(३)। वलः(४)। अश्नः(५)।
पुरुभोजाः(६)। बलिशानः(७)। अश्मा(८)। पर्वतः(९)।
गिरिः(१०)। व्रजः(११)। चरुः(१२)। वराहः(१३)। शम्बरः(१४)।
रौहिणः(१५)। रैवतः(१६)। फलिगः(१७)। उपरः(१८)।

---

(७) "बलिशान" क, ख। "पर्वात" C. D न चयमेव पाठो युक्ततर इति गम्यते चर्च्चैव निगम-दर्शनात्। ऋक् सं० १ ७, १, ३. १, ८ २६, ३ ६, १, ४९, ६। "पचान" F। च पुस्तके तु चवापि पच पूर्व्वम्।

(८) "चनुमा" च। बहुमेशकेन लिखितत्वादादर्शपाठे भ्रममूलकेषा लिपि-रित्यनुमीमे मामराचर-लिखित 'श्मा'—इत्यस्य 'नुमा' पाठभ्रमसम्भवात्।

उपलः(१८) । चमसः(२०) । अहिः(२१) । अभ्रम्(२२) । बलाहकः(२३) । मेघः(२४) । दृतिः(२५) । ओदनः(२६) । वृषन्धिः(२७) । वृत्रः(२८) । असुरः(२९) । कोशः(३०) । इति त्रिंशन्मेघनामानि * ॥ १० ॥

'आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभिः (निरु० २, २१)'—इत्युक्तेर्मेघनामत्वं पर्वतनामत्वं क्रमेण निरुच्य प्रदर्श्यते।

(१) अद्रिः †। 'अद भक्षणे (अदा० प०)'। 'अदिशदिभूशुभिभ्यः क्रिन् (उ० ४ पा०)'—इति क्रिन्-प्रत्ययः। अत्ति हि मेघो वर्षार्थमादित्यरश्मिभिराहृतान् भौमरसान्, अत्ति मेघैरभिवृष्टं जलम्, अद्यते वा प्राणिभिस्तत्प्रभवपदार्थभक्षणं तत्पोषयति, अदन्त्यस्मिन् पदार्थान् मनुष्या इति वा। यद्वा; नञ्पूर्वात् 'दृ विदारणे (क्रया० प०)'—इत्यस्मात् बाहुलकात् रिन्-प्रत्ययः टिलोपश्च। अदरणीय इत्यद्रिः पर्वतः। "वि जयुषा ययथुः सान्वद्रेः" (१, ८, १६, १)"—इति मेघस्य निगमः। "भास्वतिरिव नाद्रयः सोमो' अस्ताः ( ऋ० सं० ८, ४, १५, १)"—इति पर्वतस्य॥

(२) ग्रावा: ‡। हन्तेः (अदा० प०) 'अन्येभ्योऽपि दृश्यन्ते

(२२) "अभ्रम्" ग. C. D. F। प० १२. १, २ ।

(२३) "बलाहकः" इत्येव कातिरिक-सर्वपुस्तकेषु, पर टीकाविरोधादुपेक्षा:।

(२५) "दृतिः" घ।

(२६) "ओदनम्" ग. C. D. F ।

(२७) "विवन्धि."—इत्यपि टीकाकारमतम्। * "इति मेघानाम्" ख।

† निरु० ४, ४. ६, २ । ‡ प० ४, १। निरु० ९, ८—९ ।

( ३, २, ७५ )'—इति क्वनिप्। पृषोदरादित्वात् (६, ३, १०९) धातोर्ग्रादेशः। हन्यते हि मेघ इन्द्रेण 'अहन्नहिम् (ऋ० सं० १, २, ३६, १ )'—इति श्रूयते। हन्यतेऽनेन सोमः। यद्वा; 'गॄ निगरणे (तु० प०)', 'गॄ शब्दे ( क्र्या० प० )', गृणातिस्तुतिकर्मा (निरु० ३, ५) ; एभ्यः पूर्ववत् क्वनिपि अडागमः। दृशिग्रहणात् ( ३, २, ७५ ) सर्वं सिद्धम्। गिरत्युदकं वर्षितुम्। अत्र गिरति तत्पूर्वस्यार्थे वर्त्तते, समुद्गिरति जलं वृष्टिसमये, समुद्गीर्णं इति वा अन्तरिक्षेण, गृणाति गर्जितलक्षणं शब्दं करोति, स्तूयते वा वर्षार्थिभिरिति ग्रावा मेघः। पर्वतोऽपि इन्द्रेण हन्यते पक्षच्छेद-समये, गिरति मेघैरभिवृष्टं जलमुद्गिरति निर्झरजलम्, समुद्गीर्णं इव वा गुहादिगतसिंहादिशब्देन, शब्दकारो, स्तूयते च पदार्थ-बाहुल्यात् प्राणिभिस्तदार्थिभिरिति ग्रावा। "इन्द्र ग्रावाणो अदितिः सजोषाः ( ऋ० सं० ४, १, २९, ५ )"—इति मेघस्य निगमः। "ग्रावाणो अपं दुच्छुनामप सेधत ( ऋ० सं० ८, ८, २३, २)"—"ग्रावाण उपरेष्वा महीयन्ते (ऋ० सं० ८,८,२३,३)" —इति पर्वतस्य निगमो ॥

(३) गौरः। 'गुङ् अव्यक्ते शब्दे (भ्वा० आ०)'। 'गुध्वी-पचिवचि यमि [मनितनि*] सदिचदिभ्यस्त्रः ( उ० ४, १६२ )'—इति त्र-प्रत्ययः। मेघोगर्जितलक्षणमव्यक्ताक्षरं शब्दं करोति, गूयते शब्द्यते वा,—'अहो! अयमतीवघर्मकाले वर्षार्थमागतः' —इति। यद्वा; गामुदकं रश्मिभिराहृतं वर्षाव्यतिरिक्तेषु त्रायते पालयति। 'आतोऽनुपसर्गे कः (३, २, ३)'। शरदादिषु हि

* मानयो पाठो हस्तने मूले।

मेघेषु घनीभूताश्लिष्टव्यापः। गां पशुजीतिं भायते वा हृष्या पानीयप्रदानात्। पर्वतोऽपि निर्झरादिपतनजन्यमव्यक्तं शब्दं करोति, अभिवृष्टमुदकमुदकाधारेषु धारणाद् रक्षति च, गोत्र सुयवसवत्तया गोत्राः। "गोत्रा शिक्षन् दधीचे मातरिश्वने (ऋ० सं० ८, १, ५, २)"—"त्वं गोत्रमङ्गिरोभ्योऽवृणोरप ( ऋ० सं० १, ४, ८, ३)"—"उद्गोत्राणि सहजी दंसनावाम् ( ऋ० सं० २, २, २५, ४)"—इति च मेघनिगमाः। "गोत्रभिदं गोविदं वज्रबाहुम् ( ऋ० सं० ८, ५, २२, ६ )"—इति पर्वतस्य॥

(४) वलः *। 'वृ आवरणे (स्वा० उ०)'। 'वृषदद्दनिषि-भमश्च ( १, ३, ५८ )'—इत्यप् । अपि लकारादित्वात् लत्वम्। यद्वा; 'वल संवरणे (भू०आ०), अस्मात् 'पुंसि सञ्ज्ञायां घः प्रायेण (३, ३, ११८)'—इति घः। व्रियतेऽनेन दिश आकाशश्च मेघः पर्वतेनापि स्वशरीरेण भूमिराकाशश्च संव्रियते। "अलातृणो वल इन्द्र व्रजो गोः (ऋ० सं० ३, २, २, ५)"—इति निगमो मेघस्य। "इन्द्रो वलं रक्षितारं दुघानाम् ( ऋ० सं० ८, २, १५, ६ )"—इति पर्वतस्य॥

(५) अश्नः †। 'अशू व्याप्तौ स्वा० आ०)', 'अश भोजने (क्रा० प०)'; आभ्याम् 'इण्सिञ्जिदीङुष्यविभ्यो नक् ( उ० ३, २)'—इति विधीयमानो नक्-प्रत्ययो बाहुलकाद् भवति, षुत्वं च न भवति 'शात् (८, ४, ४४)'—इति प्रतिषेधात्। उभावपि व्याप्नुत आकाशमश्नोतयोदकम्, एको वर्षितव्यमपरोऽष्टम्। अश्ननेन

* निरु० ६, २।   † निरु० ३, २९. १०, १२।

चात्र तत्स्थत्व लक्ष्यते । "अग्नापिनद्ध मधुपर्यपश्यन् ( ऋ० सं० ८, २, १८, ७)"—इति मेघस्य । निगमोऽन्वेषणीयो वा ॥

(६) पुरुभोजा । 'भुज पालनाभ्यवहारयो (रु० प०)'—इत्यस्मात् विदिभुजिभ्या विश्वे (उ० ४, २३१)'—इति विश्वशब्द उपपदे विहितोऽसु-प्रत्यय पुरुशब्देऽप्युपपदे बाहुलकाद् (३, ३, १) भवति । पुरु बहु प्राणिजात भुनक्ति पालयति वृष्टिप्रदानेन मेघ, पर्वतो हि दुर्भिक्षादेरवति । 'समुद्र पर्वतो राजा नव दुर्भिक्षनाशका'—इत्युक्ते । पुरु अभ्यवहरति सामर्थ्याज्जलमन्न विशेषम्, एको वमितव्यमपरो हि द्रष्टमिति विशेष । बहुभि र्भुज्यते पाल्यते अभ्यवह्रियते वा । मेघस्य खिन्द्र आदित्यरश्मयश्च रक्षितार, पर्वतस्य तत्तद्देशाधिपतय । मेघ स्वहुव्युदकद्वारेण अभ्यवह्रियते । द्वयोरपि निगमावन्वेषणीयौ * ॥

(७) वलिशान । वल सवरणे (भू० आ० ), औणादिक क्विप् । ईश ऐश्वर्ये अदादिक (आ०) । लट शानच् । सह स्वश्नाकाशमीष्टे वर्षितुम्, पर्वतोऽपि स्वभोगेन भूमिमाकाश सह स्वश्नोष्टे दुर्भिक्षादेर्मनुष्यादीन्नक्षितुम् वलीयान इति, लोकवेदनिघण्टो दृष्टान्तात् पृषोदरादित्वात् ह्रस्व । निगमावन्वेषणीयौ † ॥

---

* ऋकसहित ग्रामय दृश्यते उभयोरपि निगमौ पर तत्र तत्र तत"व्याख्या श्रभिनैश्योर्मुनिमुष्टिर्वेचिसति नीपलब्धा द्रवराजन । पुरुभोजो पर्वो (१ ४ २१ ८)—इति मेघस्य 'गिरि न पुरुभोजसम् (६ ८ ११ '२)—इति पर्वतस्य ।

† "पत्रान "—इति ( ग C. D ) पठेऽपि भायणादिभार्येऽपिनाम तु न त्वरणप्रयास । तथ हि— यन्द्रोऽसि पर भूतम् (ऋ० म० ६ १ ४८ ६)—इति मेघस्य गिरक्ष व्रह च निरर्थिविनिकन पश्यानामोमन्यम न (ऋ० म० १ ८ २४ ४ )—इति तु पर्वतस्य ।

(८) अश्मा *। 'अशू व्याप्तौ (स्वा॰ आ॰)', 'अश भोजने (क्र्या॰ प॰)'। 'अशिशकिभ्यां छन्दसि (उ॰ ४, १४४)'—इति मनिन्। अश्न इत्यनेन समानार्थः। "अपांहणोदुरो अश्मव्रजानाम् ( ऋ॰ सं॰ ८, ७, २७, ६ )"—इति मेघस्य निगमः। "यो अश्मनोरन्तरग्निं जजान ( ऋ॰ सं॰ २, ६, ७, ३ )"—इति पर्वतस्य। अत्र स्कन्दस्वामिना मेघत्वेन व्याख्यातम्॥

(९) पर्वतः †। 'पॄ पालनपूरणयोः (क्र्या॰ प॰)'। 'स्नामदिपद्यर्तिपॄशकिभ्यो वनिप् ( उ॰ ४, १०९ )'। पृणन्ति पालयन्ति अवयविनं पूर्यन्ते वा तेन इति पर्वाणि। यद्वा; प्रीणातेर्बाहुलकात् (२, ३, १) वनिपि ईकारस्याकारः स च पकारात् परः प्रीणयन्ति स्वाश्रयमिति। पर्वाण्यवयवाः सन्त्यस्य 'पर्वमरुद्भ्यां तप् वक्तव्यः ( ५, २, १११ वा )'—इति मत्वर्थीयस्तप्-प्रत्ययः। मेघस्य पर्वतस्य च देवतात्मकत्वस्य चैव विद्यमानत्वात् अवयविनि वक्तुं शक्यम्। यद्वा; परिदृश्यमानाकारेणापि मेघस्य धूमादिसङ्घातत्वात्, पर्वतस्य च शिलादिमत्त्वादवयवित्वम्। यद्वा; 'पर्व, पूरणे ( भ्वा॰ प॰ )', अस्मात् 'भृमृदृशियजिपर्विपच्यमितमिनमिहर्यिभ्योऽतच् (उ॰ ३, ११०)'—इत्यतच्-प्रत्ययः। पर्वति पूरयति वर्षेण भूमिं स्वशरीरेणाकाशं वा पर्वतोऽपि निर्झरनदीप्रवाहादिना भूमिस्तोमत्याकाशञ्च पूरयति। "नि पर्वता अद्मसदो न सेदुः ( ऋ॰ सं॰ ४, ७, २, ३ )"—"वळिर्त्था पर्वतानाम् (ऋ॰ सं॰ ४, ४, २८,१)"

* निरु॰ ६, १. ८, २।
† निरु॰ १, २०. १०, ९. ११, २०।

—इति मेघस्य निगमौ । "यदङ्ग्य पर्वताः साकमाग्नव. (ऋ० सं० ८, ४, २९, १)"—"प्र पर्वतानामुशती उपस्थात् ( ऋ० सं० ३, २, १२, १)"—इति च पर्वतस्य ॥

(१०) गिरिः * । "गॄ निगरणे (तु० प०)', अथवा 'गॄ शब्दे (क्रा० प०)', गृणातिः स्तुतिकर्मा ( निरु० ३, ५ ) । किदिति वर्त्तमाने (उ० ४, १३७), 'कॄगॄशॄकुटिभिदिछिदिभ्यश्च इ (उ०४, १३८ )'—इति इ-प्रत्यय, 'ऋतइद्धातोः (७, १, १००)'—इतीत्वम् ; गिरिः । ग्रावेत्यनेन समानार्थः । "गिराविभ्यद् गिरेर्भृष्टिनं भ्राजते तुजा शवः ( ऋ० सं० १, ४, २१, ३ )"—इति पर्वतस्य । "मृगो न भीमः कुचरो गिरिष्ठाः ( ऋ० स० २, २, २४, २)"—इत्युभयस्य ॥

(११) व्रज. † । 'व्रज गतौ (भ्वा० प०)' । 'गोचरसञ्चरवहव्रजव्यजापण निगमाश्च ( ३, ३, ११९ )'—इति निपातनात् घ, करणाधिकरणयोस्तदतिरिक्ते कारकेऽपि घो भवति । व्रजत्यन्तरिक्षे व्रजत्यनेनेन्द्र इति वा व्रजोमेघ, मेघवाहनोहीन्द्रः पर्वतोऽपि पक्षच्छेदात् पूर्वमन्तरिक्षे व्रजति । अथवा स्वशरीरेण भूमिमन्तरिक्षञ्च व्रजति । व्रजन्ति तत्र प्राणिन इति वा । "अपं व्रज मूर्णुथः समाश्रम् ( ऋ० स० ७, ८, १९, ३ )"—इति मेघस्य निगम. । "व्रज गोमन्तमुशिजो वि वव्रु ( ऋ० सं० ३, ४, १४, ५ )"—इति पर्वतस्य ॥

(१२) चरु ‡ । 'चर गति-भक्षणयो. (भ्वा० प०)' । 'भृमृ

* निरु० १, १०।		† निरु० ६ २।		‡ निरु० ६, ११ ।

श्वोक्षचरित्सरितनिधनिमिमसृजिभ्य उः ( उ० १, ७ )'—इति उ-प्रत्ययः। चरन्ति गच्छन्त्यस्मादापो मेघाद्वर्षाकाले, पर्वतानां निर्झरलक्षणाः चरयन्ति जलं वर्षितव्यमिति चरुर्मेघः; चरन्ति तत्र प्राणिनः, चर्यते भक्ष्यते स्वप्रभवपदार्थरूपेणेति चरुः पर्वतः। "स नो' वृषन्नमुं चरुम् (ऋ० सं० १,१,१४,१)"—इति मेघस्य निगमः। पर्वतस्यान्वेषणीयः *।

(१२) वराहः †। वृणोतेः (स्वा० प०)। 'ग्रहवृदृनिश्चिगमश्च (३, ३, ५८)'—इत्यकारः ( अप् ); वरशब्दे कर्मण्युपपदे आङ्पूर्वाद्धरतेः 'कर्मण्यण् (३, २, १)'। वरमुदकमाहरतीति वराहः। वर उदकलक्षण आहारोऽस्येति वा वराहः (निरु० ५, ४) आङ्पूर्वाद्धरतेर्घञ्। 'वरमाहारमाहार्षीः'—इति च ब्राह्मणम्। पृषोदरादित्वात् आहारशब्दस्याकाररेफयोर्लोपः। यद्वा; वरशब्दे उपपदे हरतेः आङ्पूर्वात् 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति बाहुलकात् ड-प्रत्ययः। वराहाकारो वा कृष्णो मेघो वराहसादृश्येन वर्त्तते। वरमुत्कृष्टमुदकं वृहति उद्यच्छति वर्षितुम् 'वृह उद्यमने (तु० प०)' * * *। हन्तेः पूर्ववत् डः। यद्वा; वरशब्द उपपदे जुहोतेर्दानार्थाद् डः। वरमुदकं ददाति आदत्ते वा वर्षितुमिति वराहो मेघः, पर्वतोऽपि वरमुत्कृष्टं पदार्थमाहारयति प्राणिभिः, पदार्थानां सर्वत्र सौलभ्यादाहारयतीत्युच्यते। वर

---

* काण्वविरोधात्तु ऋग्वेदेष एव निगमः—'प्रेतो मरुत्वन्त सुराधि (८, ८, २१, ३ ऋ० सं०)' नैव सम्यक् व्याख्यातो ह्येव कष्टकल्पना कृता।

† ध० ३, १। निरु० ५, ४।

आहारोऽत्रेति वा। वराहवत् कृष्णवर्ण इति वा। वरं मूलं वृहत्युद्यच्छत्यस्मादिति वा (निरु० ५, ४)। वरं वरमित्यनेकस्य वरशब्दस्य निवृत्तिः। वरशब्दात् वृहेश्च वराह इत्यर्थः। वरमुदकमाददाति आदीयते च तस्मात् पुरुषैर्वरः पदार्थ उदकमेव वा। "विध्यद्वराहं तिरो अद्रिमस्ता ( ऋ० सं० १, ४, २८, २ )"— "वराहमिन्द्र एमुषम् (ऋ० सं० ६, ५, ३०, ५)"—इति च मेघस्य निगमौ। पर्वतस्यान्वेषणीय॥

(१४) शम्बरः। 'शमु उपशमे (दि० प०)'। अत्रान्तर्णीतण्यर्थः। 'शमेर्बन् (उ० ४, ८१)'—इति बन्-प्रत्ययः। शमयति नाशयति असुरानिति शम्बो वज्रः। यद्वा; शामयतेर्बाहुलकात् बन्-प्रत्यये पृषोदरादित्वात् शमादेशः। शम्बोऽस्य प्रहर्तृत्वेनास्ति। रो मत्वर्थीयः। प्रहरति हि वज्रः इन्द्रप्रेरितो मेघात् पर्वतानाञ्च पक्षच्छेदसमये। यद्वा; सम्पूर्वात् वृणोतेः ( स्वा० प० ) 'ग्रहवृदृनिश्चिगमश्च ( ३, ३, ५८ )'—इत्यपि सम्बरः सन् वर्णव्यत्ययेन शम्बरः। सं व्रियते मेघेनाकाश, भूमिः पर्वतेन। यद्वा; शम्बरमित्युदकनाम (निघ० १, १२), मत्वर्थीयस्य लुक्, उदकमस्यास्तीति वा, उभयत्रापि तुल्यम्। "उतादर्दर्मन्युना शम्बराणि वि ( ऋ० सं० २, ७, १, २ )"—"अधूनोत् काष्ठा अव शम्बरं भेत् (ऋ० सं० १, ४, २५, ६)"—इति मेघस्य निगमौ। पर्वतस्यान्वेषणीय.॥

(१५) रौहिणम्। 'रुह बीजजन्मनि (भू० प०)', भावे घञ् (३, ३, १८) रोहः आरोहणम् आदित्यप्रभादीनामस्मिन्नस्तीति।

'अत इनिठनौ (५, २, ११५)', रोहि अन्तरिक्षम्। 'तत्र भवः (४, ३, ५३)'—इत्यण् 'इनण्यनपत्ये (६, ४,१६४)'—इति प्रकृतिभावः रौहिणः। अन्तरिक्षेण हि गच्छति मेघः, पक्षच्छेदात् पूर्वं पर्वतश्चेति तत्र भव इति वक्तुं शक्यते। यद्वा; 'बहुलमन्यत्रापि (उ० २, ४६ )'—इति इनच्-प्रत्यये रोहिण इन्द्रः। 'तस्येदम् (४, ३, १२०)'—इत्यण् रौहिणः। आरोहति मेघमिन्द्रः स्ववाहनत्वात्, 'तुराषाण्मेघवाहनः ( अम० को० १, ४७ )'—इति तत्पर्यायेषु पठ्यते। अप्सरोभिः सह रिरंसया पर्वतेष्विन्द्रस्य गमनात् तदीयता। यद्वा; उभयथापि छेद्य-छेदकभावेन सम्बन्धः। तथाच चरकाध्वर्यूणां ब्राह्मणे इतिहासः श्रूयते—'प्रजापतेर्वा एतज्ज्येष्ठं तोकं यत्पर्वतास्ते पक्षिण आसन्, ते यत्र यत्र कामयन्ते तत्परा तमासत, इयं हि शिथिरासीत्, तेषामिन्द्रः पक्षानच्छिनत्, तैरिमा दृहदिति'। "अहन्नहिमभिनद्रौहिणम् ( ऋ० सं० १, ७, १६, २)"—"यो रौहिणमस्फुरद्वज्रबाहुः ( ऋ० सं० २, ६, ८, २ )" - इति निगमौ क्रमेण॥

(१६) रैवतः। रेवत्यो गावः 'पशवो वै रेवतीः'—इति श्रुतेः। 'तस्येदम् ( ४, ३, १२० )'—इत्यण्। मेघो हि सर्वत्र वर्षति यवसं पानीयं च जनयित्वा तदीयो भवति, पर्वतस्तद्रक्षया। यद्वा; रयिरस्यास्तीति मतुपि 'रयेर्मतौ बहुलम् (६, १, ३४ वा०)'—इति सम्प्रसारणम्, 'संज्ञायाम् (८, २, ११ )'-इति वत्वम्, सर्वस्य धनस्येशित्वात् रेवान् इन्द्रः, मघवेति हि तस्य नाम, तदीयो रैवतः। पूर्ववत् तदीयत्वं द्रष्टव्यम्। निगमावन्वेषणीयौ॥

(१७) फलिगः। प्रतिफलति तत् फलम्। तदस्मिन्नस्तीति फलि स्वच्छमुदकं तद्गच्छत्याधारत्वेन मेघो वर्षिष्यमाण पर्वतो हि दृष्टमिति विशेषः। ड-प्रकरणे 'अन्येष्वपि दृश्यते (३, २, १०१)' —इति गमेर्ड-प्रत्ययः, स्वच्छोदकपूर्ण इत्यर्थः। यद्वा; फलवत्-स्नानपानादि-प्रयोजनवत् उदकं फलि, तद्गच्छतीति पूर्ववत्। माधवस्तु—'फलिर्भेदनकर्मापि भिन्दन् गच्छति फलसंयुक्तो गच्छतीति वा'—इति निरवोचत्। तस्यायमभिप्रायः प्रायेण मेघो हि वर्षासु ग्रीष्मजन्यं तापं भिन्दन् गच्छति, पर्वतोऽपि स्वभारेण भूमिं भिन्दन्नधोगच्छति, प्रलयकाले वा शतधा स्वयमेव भिद्यमानो गच्छति भाष्यम्। कपिफलस्य मेघायत्तत्वात् फलसंयुक्तो गच्छति इत्युच्यते। तथाच कालिदासः—'त्वदायत्तं कृषिफलमिति भ्रूविकारानभिज्ञैः'—इति मेघकाव्यम्। पर्वतोऽपि शस्यादिरूढवृक्षादि-फलसंयुक्तो गच्छति च। फलवत्स्वदप्यार्थां। फलेर्गमि गम्यादित्वादिन् ( ? ), गमेः पूर्ववत् डः ( ३, २, १०१ ) इति च। "वलं दंरोज अलिगं रवेण ( ऋ० सं० ३, ७, २६, ५ )"—इति निगमः॥

(१८), (१९) उपरः *, उपलः †। 'आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभि ( निरु० २, २१ )'—इत्यादि-भाष्यस्य स्कन्दस्वामि-ग्रन्थः—'आ उपर उपल इति; आङ् अभिविधौ मर्यादायामित्यन्ये, विना उपरउपल इत्येताभ्यां साधारणानीत्यर्थः। आ उपरादिति वक्तव्ये उभयोरुपादानं रलयोरवि-

---

* ३० ६। † नि० २, २१।

मेघत्वप्रदर्शनार्थम् । तयोर्येकनिर्वचनत्वप्रदर्शनार्थमेकयोगपाठत्वं चाङ्गीकृत्याह—'उपर उपलो मेघो भवति ( निरु० २, २१ )'— इति । वक्ष्यमाणनिगमापेक्षया उपलशब्दस्य च पापाणे प्रसिद्धत्वात् 'तेषामुपरः स्थविष्ठो मध्यमः'—इति तत् सङ्घातशब्दे पर्वत उपलशब्दवाच्यत्वेन प्रसिद्ध एवेति मेघग्रहणं कृतम्। मर्यादापक्षस्य च मेघग्रहणमेव लिङ्गमिति उत्तराणि मेघस्यैवेति। यदा पर्वतस्तदा उपेत्य रमन्ते अस्मिन् पक्षाणीति, मेघपक्षे आप इति। अभिविधिपक्षे नेदं निर्वचनम्'—इति। जनेर्विधीयमानो ड-प्रत्ययो (३, २, ९७) बाहुलकाद्रमेर्भवति (३, ३, १); कृदुत्तरपदप्रकृतिस्वरं (६, २, १३९) बाधित्वा अव्ययपूर्वपदप्रकृतिस्वरत्वम् (६, २, २)। 'उपरोजलवापनात्'—इति माधवः। वपेः कृदरादित्वात् (उ० ५, ४२) अरन् द्रष्टव्यः, सम्प्रसारणं च बाहुलकात्। उपरमिव हि नभस्यभ्रं भूमौ पर्वतश्च'—इति माधवः। अत्र गोभोगः —'पृषिपटिदेविकेविवपिवचिभ्यश्चित्'—इत्यलच्-प्रत्ययः। श्रुतपाठ्यमवधारणीयावच्छन्ती। मेघनामत्वे तत्र—"एषामुपरा उदीयन् (ऋ० सं० ७, ७, १८, ३)"—इति निगमः। पर्वतानां चान्वेषणीयः। "हिरण्यनिर्णिगुपरा न ऋष्टिः (ऋ० सं० २, ४, ४, ३)" —इति। अत्र 'उपरा अश्माश्चिह्ला दीर्घाः'—इति माधवः॥

(२०) चमसः ॥। 'चमु अदने ( भ्रू० प० )'; 'अत्यविचमि ( उ० ३, ११३)'—इत्यादिना असच्॥

(२१) अद्रिः ॥। 'इण् गतौ (अदा० प०)'; 'इन् सार्व-

* निरु० १०, १८, १९, १८।

† ऋ० १२, ३, ३। निरु० १०, ११।

धातुभ्यः (उ० ४, ११४)'—इतीन् प्रत्ययः, गुणावादेशौ, यकारस्य इकारो व्यत्ययेन। एतल्लारिघे। अयतेरेव गत्यर्थादिन्-प्रत्यये पूर्ववद् व्यत्ययः। यद्वा; 'अहि गतौ' भौवादिकः (भा०), इन् प्रत्ययः, बाहुलकान्नलोपः, आगमानित्यत्वाद्वा नुम् न क्रियते। इ-प्रत्ययाधिकारे श्रीभोजदेवः—'आहिकुण्डलिकं पान्नलोपश्च'—इति। यद्वा; 'अह व्याप्तौ' स्वादिः (प०), इन्, अश्नोति व्याप्नोति आकाशं दिगन्तराणि वा। यद्वा; आङ्पूर्वाद्धन्तेः हिंसार्थाद् गत्यर्थाद्वा 'आङि श्रिहनिभ्यां ह्रस्वश्च (उ० ४, १३३)'—इति इण्-प्रत्ययो डिच्च, आ समन्तात् हन्ति भिनत्ति उष्माभिमुख्येन, हन्ति गच्छत्यन्तरिक्षम्। यद्वा; केवलादेव हन्तेर्बाहुलकादिण् प्रत्ययो डिच्च, हिः हन्ता, न हन्ता अ-हन्ता, अहिः अ-हिंसक इत्यर्थः; सर्वदा लोकस्य वर्षप्रदत्वात्। माधवेन तु—त्वमपामपिधानां वृणोरप (ऋ० सं० १, ४, ८, ४)'—इत्यत्र, वाजसनेये तु 'सोऽग्निषोमावभिसम्बभूव सर्वां विद्यां सर्वं यशः सर्वमन्नाद्यं सर्वां श्रियं स यत्सर्वमेतत् समभवत् तस्मादहिः'—इति प्रदर्शितम्। तेन चैतद् युक्तम्। अहिशब्दोऽसुरवाचक आद्युदात्तः। "यदिन्द्राहन् प्रथमजामहीनाम् (ऋ० सं० १, २, २६, ४)"—इति। नदीवचनोऽन्तोदात्तः। 'इन्द्रोदस्तं परि आनादहीनाम् (ऋ० सं० ८, ७, २७, ६)"—इति। पचाहि-शब्दमेघनामत्वेनामापयत् स्कन्दस्वामी। "दासपत्नीरहिगोपा अतिष्ठन् (ऋ० सं० १, २, २८, १)"—इति निगमः'॥

(२२) अभ्रम् *। 'अभ्र गतौ (भू० प०)'; पचाद्यच् (१

---

* निरु० ३, ३।

१, १३४ ), अभ्रन्त्यन्तरिक्षे। आपो रातीति वा अप्शब्दे कर्मण्युपपदे रातेर्दानार्थात् 'आतोऽनुपसर्गे कः (३, २, ३)', पकारस्य भकारो व्यत्ययेन (३, १, ८८)। न भ्रंश्यत्यस्मादापो वर्षासमयादन्यत्रेति वा। यदुक्तं—'न भ्रंस्यति यतस्तेभ्यो जलान्यभ्राणि मान्यतः'—इति। नञ् पूर्वात् 'भ्रसभ्रंस अधःपतने (भ्वा॰ आ॰)'—इत्यस्मात् 'अन्येष्वपि दृश्यते (३, २, १०१)'—इति ड-प्रत्ययः। न भ्राजते वा वर्षासु मलिनवर्णत्वात् भ्राजतेः पूर्ववत् डः ( ३, २, १०१)। "प्र वः पिन्व विद्युदभ्रेव रोदसी ( ऋ॰ सं॰ ७, १, १, १ )"—"उदभ्राणीव स्तनयन्नियर्ति ( ऋ॰ सं॰ ४, ७, १८, २)"—इति च निगमौ॥

(२३) बलाहकः। बलाकाभिर्हीयते गम्यते इति बलाहकः, वारिवाहको वा ; पृषोदरादित्वात् (६, ३, १०९) वर्णागमादिना साधुः। वराह-शब्दाद्वा 'सञ्ज्ञायां कन् ( ५, ३, ७५ )'; रेफस्य लकारः। उक्तार्थो वराह-शब्दः (१७), विकृतस्यासाधारणार्थत्वप्रदर्शनाय पुनः पाठः। निगमोऽन्वेषणीयः॥

(२४) मेघः *। 'मिह सेचने (भ्वा॰ प॰)'; पचाद्यच् (३,१, १३४), न्यङ्क्वादित्वात् कुत्वम्। मेहति सिञ्चति वर्षणभूमिं मेघः। "हर्या वा मेघो हर्यथा पीपाय ( ऋ॰ सं॰ २, ४, २६, २ )"—"अस्मिन् मेघे विद्युत् ( ? )"—इति च निगमौ॥

(२५) दृतिः। 'दॄ विदारणे (क्र्या॰ प॰)'। 'दृणातेर्ह्रस्वश्च (उ॰ ४, १७८)'—इति ति-प्रत्ययः, ह्रस्वविधानसामर्थ्याद् गुणो न

* निरु॰ २, ३;—२१।

भवति । दीर्यते इन्द्रेण, दृतिवत् स्यन्दमानाधारत्वाद्वा । 'दृतिं सु कर्षं विषितं न्यञ्चम् ( ऋ० सं० ४, ४, २८, २ )"—"ईशानो विसृजद् दृतिम् ( ? )'—इति च निगमौ ॥

(२६) ओदनः * । उदकशब्दे उपपदे ददातेः 'कृत्यल्युटो बहुलम् (३, ४, ११३)'—इति कर्त्तरि ल्युट् । ओदनः उदकदातेत्यर्थः । * * * । यद्वा ; 'उन्दी क्लेदने (रु० प०)' ; 'उन्देर्नलोपश्च ( उ० २, ७२ )'—इति युचप्रत्ययः, गुणः ; उनत्ति वनभूमिम् ओदनः । "धारयत् पक्वमोदनम् ( ऋ० सं० ६, ५, १०, १)"—इति निगमः ॥

(२७) वृषन्धिः । 'वृष सेचने (भू० प०)' ; 'कनिन्युवृषीत्यादिना ( उ० १, १५४ ) कनिन्, वृषा । शत्रुजयादिसाधनत्वात् कामानां वर्षिता यज्ञः, सन्निधीयतेऽग्निरिस्त्रेण प्रहारकाले 'कर्मण्यधिकरणे च ( ३, ३, ९३ )'—इति कि-प्रत्ययः न लोपाभावश्छान्दसः । "विपन्धि."—इति केषुचित् कोशेषु दृष्टम् । तदा विषं जलं धीयतेऽस्मिन्निति निर्वाहः, नुगागमश्छान्दसः । निगमदर्शनान्निर्णयः । "वृषा वृषन्धिश्चतुरश्रिमस्यन् ( ऋ० सं० २, ६, ७, २)"—इति मेघनाम न वेति सन्दिग्धम् † ॥

(२८) वृत्रः ‡ । वृणोतेराच्छादनार्थात् (स्वा० प०) 'स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्' ... 

* निरु० ६ ३३ ।

† 'वृषन्धि मेघ—मैदगदाश्च सर्वं कर्मन्'—इति तत्सायणीयभाष्यम् ।

‡ प० १, १० । निरु० २, १६ ,—१७ । § 'क्र '—इति मूलपाठ ।

बाहुलकाद् भवति ; आच्छादयति ह्यसौ कृत्स्नं नभः । वर्त्ततेर्वा गतिकर्मणः (निघ० २, १४) 'स्फायितञ्चिवञ्चि (उ० २, १२)'—इत्यादिना रक्प्रत्ययः ; गच्छत्यसौ कृत्स्नं नभः । वर्द्धतेर्वा वृद्ध्यर्थात् (भ्वा० आ०) बाहुलकात् वन् , धकारस्य तकारो व्यत्ययेन ; वर्द्धते हि वर्षासु मेघः । ब्राह्मणोक्ता एवामी त्रयोऽप्यर्थाः—'यदिमांल्लोकानवृणोत् तद् वृत्रस्य वृत्रत्वम् , स इषुमात्रमिषुमात्रं विष्वङ् व्यवर्द्धत'—इति । "वृत्राय वज्रमीशानः कियेधाः (ऋ० सं० १, ४, २८, २)" — "अहन्यद् वृत्रतूर्ये विवेषः (ऋ० सं० ८, ८, ५, १)"—इति च निगमौ ॥

(२८) असुरः * । 'असु क्षेपणे (दि० प०)' ; 'असिमसोरुरन् (उ० १, ४२-४३)'—इति उरन्-प्रत्ययः ; अस्यति क्षिपति भूमौ जलम् । यद्वा ; अस्यते क्षिप्यते स्थाने इन्द्रेण वर्षार्थम् । यद्वा ; अस्ति (भू० प०) तिष्ठति 'शृस्वृस्निहित्रप्यसिवसि (उ० १, १०)'—इत्यादिना उ-प्रत्ययः असुः । शरीरे अस्यतीत्यसुः प्राणः । 'प्राणा वा आपः'—'पानीयं प्राणिनां प्राणाः'—इत्यादिदर्शनात् असु-शब्देनात्र जलमुच्यते । तद्राति, 'आतोऽनुपसर्गे कः (३, २, ३)' । यद्वा ; जलवान् प्राणवान् वा । रो मत्वर्थीयः । यद्वा ; 'असु गतिदीप्त्यादानेषु' भौवादिकः स्वरितेत् ; पूर्वस्मादेव सूत्रादुरन् । असति गच्छत्यन्तरिक्षे, दीप्यते रूपम् , आदत्ते वा जलं वर्षितुम् । यद्वा ; 'सुर ऐश्वर्ये (तुदा० प०)', इगुपधलक्षणः कः (३, १, १३५), सुरतीति सुर ईश्वरः स्वतन्त्र इत्यर्थः, असुरः अनीश्वरः, इन्द्राद्यपर-

* निघ० १, ८ ।

तन्त इत्यर्थः । "दिवः श्येनासो असुरस्य नीळयः ( ऋ० सं० ८, ४, २४, १)"—"दीर्घा धियोरक्षमाणा असुर्यम् ( ऋ० सं० २, ७, ६, ४)"—इति च निगमौ ॥

(२०) कोशः * । क्रोशतेः शब्दकर्मणः (भू० प०) पचाद्यचि (३, १, १३४) पृषोदरादित्वात् ( ६, ३, १०९ ) रेफलोपः कोशः । मेघो हि गर्जितलक्षणं शब्दं करोति । कुष्यतेर्वा हरणार्थात् (दि० प०), अस्मिन्नेवार्थे षकारस्य शकारः, इत्युमामवर्तितेत्युक्तम्(२८) । कोशतिश्छादनार्थ इति माधवः, पूर्ववदवच्छादयत्यसौ हरद्धं नभः । जलस्य कोशस्थानीयत्वात् कोश इत्यन्ये । यद्वा ; 'कु शब्दे (तु० आ० )', 'कुदाधाभ्यः शः'—इति श्रीभोजदेवः ; कौति (अदा ०प०) गर्जितशब्दं करोति कोशः । "दिव्या न कोशासो अभ्रवर्षाः ( ऋ० सं० ७, ३, २४, ६ )"—"महान्तं कोशमुदचा नि षिञ्च (ऋ० सं० ४, ४, २८, ३)"—इति च निगमौ ॥

इति त्रिंशन्मेघनामानि ॥ १० ॥

श्लोकः[१] । धारा[२] । इळा[३] । गौः[४] । गौरी[५] । गान्धर्वी[६] । गभीरा[७] । गम्भीरा[८] । मन्द्रा[९] । मन्द्राजनी[१०] । वाशी[११] । वाणी[१२] । वाणीची[१३] । वाणः[१४] । पविः[१५] । भारती[१६] । धमनिः[१७] । नाळीः[१८] ।

---

* निरु० ९, २६ ।

(१८) "नाली" क ख, घ । पर क-पुस्तकोदाहृत-निगम-विरोधादुपेक्षित । "नालि" ङ. प, ञ । "नीलि" C D F, ञ ।

मेना[19] । मेळिः[20] । सूर्या[21] । सरस्वती[22]। निवित्[23]। स्वाहा[24]। वग्नुः[25] । उपब्दिः[26]। मायुः[27] । काकुत्[28]। जिह्वा[29]। घोषः[30]। स्वरः[31]। शब्दः[32]। स्वनः[33] । ऋक्[34] । होत्रा[35] । गीः[36] । गाथा[37] । गणः[38] । धेना[39] । ग्नाः[40] । विपा[41] । नना[42] । कशा[43] । धिषणा[44]। नौः[45]। अक्षरम्[46]। मही[47]। अदितिः[48]। शची[49]। वाक्[50]। अनुष्टुप्[51]। धेनुः[52]। वल्गुः[53]। गल्दा[54]। सरः[55]। सुपर्णी[56] । बेकुरा[57]। इति सप्तपञ्चाशद् वाङ्नामानि * ॥ ११ ॥

---

(१९), (२०) कातिरिकेषु सर्वेषेव व्यत्ययपाठः "मेळिः मेना:" इति। "मेनि." ग. iid प० ९, २०।

(२४) "स्वाहा" घ। (२५) "वग्नु" ग. iid, क।

(२८) "काकुप्" ग iid, क। (२९) "जिह्वो" घ।

(३८) 'गणा'—इत्यपि टीकासम्मत: पाठः।

(४०) "ग्ना:"—इति क-D-E-पुस्तकातिरिक्तेषु सर्वेषु, परं क-पुस्तकस्य टीकाकारसम्मतत्वात् ग्राह्यम्।

(४२) "नना"—इत्येव कातिरिक्त सर्वपुस्तकेषु, परं टीकाकृता कैश्चिद्-पुस्तकपाठाभावाद् योतितम्। निरु० ५, ६।

(५१) "अनुष्टुप्"—इति घ। (५३) "वल्गु" ग C. D. F, क।

(५४) "गल्दा" ख E। "गल्द" ग C. F, क। "गल्दद" D, क।

(५५) "रसः" ग. C. F, क। प० १२. २, ७। "रास" D, क।

(५७) "वेकु." घ, क।  * "इति वाच." ग।

'आ उपर उपल इत्येताभ्यां साधारणानि पर्वतनामभिः। * *। वाङ्नामान्युत्तराणि (निरु० २, २१—२३)'—इति भाष्ये स्कन्दस्वामी—'उत्तराणि सप्तपञ्चाशत् श्लोकइत्यादीनि वाङ्नामानि। उच्यते इति वाक् इन्द्रियम्, तत्कार्यः शब्दोऽप्युच्यते इति वाक्, उच्यतेऽनया अर्थः इति वाक्, स्तनयित्नुलक्षणा माध्यमिका साप्युच्यते इति वाक्, तदधिष्ठात्र्यपि देवता वागिष्यते। सर्वतश्चास्या मेघहेतुत्वात् मेघनामभ्य उत्तराणीति। स च वाक्-शब्दो 'वचिपरिभाषणे (अदा० प०)'—इत्यस्मात् धातोः 'क्विप् वचि (उ० २, ५४। ३, २, १७८ वा०)'—इत्यादिना क्विपि दीर्घत्वे सम्प्रसारणाभावे च व्युत्पन्नः॥

(१) श्लोकः *। 'श्रु श्रवणे (भू० प०)'; 'इण्भीकापाशल्यतिमर्चिभ्यः कन् (उ० ३,४३)'—इति कन्-प्रत्ययो बाहुलकाद्भवति, गुणः, कपिलकादित्वात् लत्वम्; श्रूयते इति श्लोकः। यद्वा; 'श्लोक सङ्घाते (भू० आ०)'; 'पुंसि सञ्ज्ञायां घः (३, ३, ११८); श्लोक्यते पद्यते स्तूयते संहन्यते कविभिः श्लोकः 'पद्ये यशसि च श्लोक' (३, ३, २)'—इत्यमरसिंहः। "ऋतस्य श्लोको बधिरा ततर्द (ऋ० सं० ३, ६, १०, ३)"—"श्लोको न यातामपि वाजो अस्ति (ऋ० सं० ७, ६, ११, ५)"—इति निगमौ॥

(२) धारा †। 'धृञ् धारणे (भू० उ०)'; 'हेतुमति च (३,१, २६)'—इति णिचि 'णेरजण्यन्तानाम् (१,२,५६ भा०)'—इत्यस्याप्रापकत्वादेव 'कृत्यल्युटो बहुलम् (३, ३, ११३)'—इति कर्त्तरि

---

* निरु० ८, ९।

† निरु० १३, ६।

भवति। यद्वा ; धारेः पचाद्यच् (३, १, १३४) ; लोकस्य धारयित्री वर्षप्रदानेन स्वाभिधेयस्य वा। "तनसहे सुधारा"—इत्यत्र धारा वाङ्नाम। "धारां सुतस्य रोचते ( ऋ० सं० ७, ६, २४, १)"—"यः ससाद् धारां सुतस्य (ऋ० सं० १, ५, ११, ४ )"—इति च निगमौ ॥

(३) इळा *। 'इल क्षेपणे (तु० प०)' ; इगुपधेभ्यः ( ३, १, १३५) कर्त्तरि विधीयमानः कः प्रत्ययो बाहुलकाद् (३, ३, १) भवति। क्षिप्यते प्रेर्यते उच्चारणकाले प्राणेन ; इला। बह्वृचानां लत्वमुक्तं पूर्वमेव(१)। यद्वा ; 'ईड् स्तुतौ (अदा० आ०)'—'ञि इन्धी दीप्तौ (रु० आ०)' ; आभ्यां पूर्ववत् कः ( ३, ३, १ ), पृषोदरादिः (६, ३, १०९) ; ईडते स्तूयतेऽनया देवता ईड्यते वा या स्वयं देवतात्वात्, दीपयति मयोक्तारं, दीप्यते वा स्वेन तेजसा। यद्वा ; इलेत्यन्ननाम ( निघ० २, ७ ), मत्वर्थीयः ; यजमानानां देवेनाम्नेन हविर्लक्षणेन वा तद्वती इला। "अभि न इळा यूथस्य माता ( ऋ० सं० ४, २, १६, ४)"—इति निगमः ॥

(४) गौः †। व्याख्याता पृथिवीनामसु(१)। गच्छति यस्मिन्नाहता, गोयते स्तूयते वा। "अयं स शिङ्क्ते येन गौरभीवृता ( ऋ० सं० २, ३, १८, ४)"—इति निगमः ॥

(५) गौरी ‡। रोचतेर्ज्वलतिकर्मणः ( निघ० १, १६ )। 'ऋज्रेन्द्राग्रवज्रविप्रकुब्र (उ० २, २०)'—इत्यादि-सूत्रेण रन्-प्रत्ययान्तो गौरशब्दो निपातितः, तस्माद्रुचेर्धातोर्गौभावादेशः, 'षिद्गौरादि-

---

* पु० १।११ पृ० ९ पं०।

१ पु० १। ७पृ० १ पं० ‡ प० ५, ३। निरु० ११, ३८।

भ्यश्च (४, १, ४१)'—इति ङीष्। तया दीप्त्या ज्वलति वाग्-देवतात्वात्। यद्वा; 'गूरी उद्यमने (तु॰ आ॰)', अस्मात् इनि पूर्ववन्निपातनादुकारस्यौकारः, 'रोरि (८, ३, १४)'—इति रेफ-लोपः, ङीष्; गुरते उद्यच्छति सममिधेयम्; उद्यमनं चात्र प्रकाशनम्। यद्वा; 'गुङ् अव्यक्ते शब्दे (भ्व॰ आ॰)'—इत्यस्मान्नि-पातनादिनि वृद्धिः; गवते गर्जितलक्षणमव्यक्तशब्दं करोतीति गौरी। यद्वा; शुक्लवर्णत्वात् गौरी, 'भास्वत्पदां शशिकला-मिन्दुकुन्दावदाताम्'—इत्याचार्याः, 'सर्वशुक्ला सरस्वती'—इति च। "गौरीर्मिमाय सलिलानि तक्षती (ऋ॰ सं॰ २, ३, २२, १)"—सोमो गौरी अधिश्रितः (ऋ॰ सं॰ ६, ७, ३८, १)"—इति च निगमौ॥

(६) गान्धर्वी। गतिगन्ध्यव्ययश्च वः ( ? )। 'धृञ् धारणे (भ्व॰ उ॰)'—इत्यस्मात् गोशब्दोपपदाद्वा व-प्रत्ययः, उपपदस्य गवादेशः, गन्धर्वः; गोर्यज्ञस्य धारयितेन्द्रः। भोजस्तु 'गन्धेरत् च'—इति व-प्रत्ययोऽधिकृतः धातोरगागमश्च। गन्धयति अर्दयति हिनस्ति दैत्यशत्रूनिति गन्धर्व इन्द्रः। 'गन्ध अर्दने'—इति धातु-श्चुरादिरात्मनेपदी। 'तस्येदम् (४, ३, १२०)'—इत्यण्, ङीप् (४, १, १५), गान्धर्वी। ऐन्द्रीत्यर्थः। तथाच ब्राह्मणम्—'अथ ऐन्द्रवायवी तस्यै यदैन्द्रं पदं तेन वाचं कल्पयति, वागैन्द्री (ऐ॰ ब्रा॰ २, ४, २)'—इति। यद्वा; गन्धर्वा देवानां गायकाः, तेषा-मियम्। तथाचैतरेयब्राह्मणे-'सोमो वै राजा गन्धर्वेष्वासीत् (ऐ॰ ब्रा॰ १, ५, १)'—इत्यस्मिन् खण्डे वाचो गान्धर्वीत्वं स्पष्टमुक्तम्।

भवति। यद्वा ; धारेः पचाद्यच् (३, १, १३४) ; लोकस्य धारयित्री वर्षप्रदानेन स्वाभिधेयस्य वा। "तनसहे सुधारा"—इत्यत्र धारा वाङ्नाम। "धारा सुतस्य रोचते ( ऋ० सं० ७, ६, २४, १)"—"यः ससाद धारा सृतस्य (ऋ० सं० १, ५, ११, ४ )"—इति च निगमौ॥

(३) इळा *। 'इल क्षेपणे (तु० प०)'; इगुपधेभ्यः ( ३, १, १३५) कर्त्तरि विधीयमानः कः प्रत्ययो बाहुलकाद् (३, ३, १) भवति। क्षिप्यते प्रेर्यते उच्चारणकाले प्राणेन ; इला। बहूचानां लत्वमुक्तं पूर्वमेव(१)। यद्वा ; 'ईड़ स्तुतौ (अदा० आ०)'—'ञि इन्धी दीप्तौ (रु० आ०)'; आभ्यां पूर्ववत् कः ( ३, ३, १ ), पृषोदरादिः (६, ३, १०८) ; ईड़ति स्तूयतेऽनया देवता ईड्यते वा या स्वयं देवतात्वात्, दीपयति प्रयोक्तारं, दीप्यते वा स्वेन तेजसा। यद्वा ; इलेत्यन्ननाम ( निघ० २, ७ ), अकारो मत्वर्थीयः ; यजमानानां देयेनान्नेन हविर्लक्षणेन वा तद्वती इला। "अभि न इळा यूथस्य माता ( ऋ० सं० ४, २, १६, ४)"—इति निगमः॥

(४) गौः †। व्याख्याता पृथिवीनामसु(१)। गच्छति यस्मिन् व्याहृता, गीयते स्तूयते वा। "अयं स शिङ्क्ते येन गौ रभीवृता ( ऋ० सं० २, ३, १८, ४)"—इति निगमः॥

(५) गौरी ‡। रोचतेर्ज्वलतिकर्मणः ( निघ० १, १६ )। 'ऋज्रेन्द्राग्रवज्रविप्रकुब्र (उ० २, २७)'—इत्यादि-सूत्रेण रन्-प्रत्ययान्तो गौरशब्दो निपातितः, तस्माद्रुचेर्धातोर्गोवादेशः, 'षिद्गौरादि-

* पृ० १।१२ ष० ८ प०।
१ पृ० ११ * पृ० ६ पं० ‡ प० ६, ३। निरु० ११, ३८।

भ्यश्च (४, १, ४१)'—इति ङीष् । स्वया दीप्त्या ज्वलति वाग्-देवतात्वात् । यद्वा ; 'गूरी उद्यमने (तु० आ०)', अस्मात् इनि पूर्ववन्निपातनादुकारस्योकारः, 'रोरि (८, ३, १४)'—इति रेफ-लोपः, ङीष् ; गुरते उद्यच्छति स्वमभिधेयम् ; उद्यमनं चात्र प्रकाशनम् । यद्वा ; 'गुङ् अव्यक्ते शब्दे (भू० आ०)'—इत्यस्मान्नि-पातनादिनि वृद्धिः ; गवते गर्जितलक्षणमव्यक्तशब्दं करोतीति गौरी । यद्वा ; शुक्लवर्णत्वात् गौरी, 'भास्वत्पदां शशिकला-मिन्दुकुन्दावदाताम्'—इत्याचार्याः, 'सर्वशुक्ला सरस्वती'—इति च । "गौरीर्मिमाय सलिलानि तक्षति ( ऋ० सं० २, ३, २२, १)"—सोमो गौरी अधिश्रितः ( ऋ० सं० ६, ७, ३८, ३ )"—इति च निगमौ ॥

(६) गान्धर्वी । गविगन्धश्यन्यसौ वः ( ? ) । 'धृञ् धारणे ( भू० उ० )'—इत्यस्मात् गोशब्दोपपदाद्वा व-प्रत्ययः, उपपदस्य गवादेशः, गन्धर्वः ; गोर्यस्य धारयितेन्द्रः । भोजस्तु 'गन्धेरक् च' —इति व-प्रत्ययोऽधिकृतः धातोरगागमश्च । गन्धयति अर्दयति हिनस्ति दैत्यशत्रूनिति गन्धर्वः इन्द्रः । 'गन्ध अर्दने'—इति धातु-श्चुरादिरात्मनेपदी । 'तस्येदम् ( ४, ३, १२० )'—इत्यण् , ङीप् (४, १, १५), गान्धर्वी । ऐन्द्रीत्यर्थः । तथाच ब्राह्मणम्—'अथ यैन्द्रवायवी तस्यै यदैन्द्रं पदं तेन वाचं कल्पयति, वाग्घैन्द्री ( ऐ० ब्रा० २, ४, २)'—इति । यद्वा ; गन्धर्वा देवानां गायकाः, तेषा-मियम् । तथाचैतरेयब्राह्मणे-'सोमो वै राजा गन्धर्वेष्वासीत् (ऐ० ब्रा० १, ५, १ )'—इत्यस्मिन् खण्डे वाचो गान्धर्वीत्वं स्पष्टमुक्तम् ।

'तां गन्धर्वोऽवदीत् गर्भे अन्तः'– इति श्रुतिः। "अग्निर्गोर्न्धर्वो पथ्या ऋतस्य ( ऋ० सं० ८, ३, १५, ६)"—इति निगमः॥

(७) गभीरा *, (८) गम्भीरा †। भीयन्ति (दि० प०) रातीति (अदा० प०) भीरा:। 'आतोऽनुपसर्गे कः (३, २, ३)'। गवां भीरा गभीरा गम्भीरा च। पृषोदरादित्वात् (६, ३, १०९) गो–शब्दस्य ग–भावो गम्भावश्च। स्तनयित्नु–लक्षणा हि माध्यमिका वाक् श्रूयमाणैव सर्वप्राणिनां भियमादधाति। यद्वा; उणादौ गभीरादि सूत्रेण गमेर्ह्रोतीरीरन्–प्रत्यये नुमागमो मकारस्य विकल्पेन लोपो निपात्यते ( उ० ४, ३४ )। गच्छति यश्रे, अधिगम्यते वा ज्ञानार्थिभिः। यद्वा; 'गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च' भौवादिकः (आ०), अस्य कुत्वं, भयाभ्यादेशः, वा च नुम् निपात्यते। प्रतिष्ठिता स्वस्मिन् स्थाने, लिप्स्यते वा प्राणिभिः, ग्रथिता वा गद्यपद्यादिरूपेण गभीरा गम्भीरा। उभयोरपि निगमावन्वेषणीयौ॥

(९) मन्द्रा ‡। 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु (भ्वा० आ०)'। गच्छति स्वाभिधेयं प्राप्नोति, अधिगम्यते वा तदर्थिभिः। "स मन्द्रया च जिह्वया (ऋ० सं० ५,२,१२,३)"—इति निगमः॥

(१०) मन्द्राजनी। मन्द्रशब्दो व्याख्यातः। 'अज गतिक्षेपणयोः (भ्वा० प०)', ल्युट्। मन्द्रं अजनं गमनं क्षेपणं प्रेरणं मुखारणं वा यस्याः सा मन्द्राजनी, पिप्पल्यादिषु द्रष्टव्यम्। ( ४, १,

---

* प० १२. ३, ३,—१०। † १ प० ३, १०। 
‡ निरु० ११, २८,—२९।

४१ ग०) "मन्द्राजनी घोदते अन्तरासनि (ऋ० सं० ७, २, २१, २)"—इति निगमः ॥

(११) वाशी *। 'वाशृ शब्दे' दैवादिकः (आ०)। 'वसिवपियजिराजिव्रजिषदिहनिकमिवाशिवादिवारिभ्य इञ् (उ० ४, १२१) कर्मणि कारके वा इष्यते, वाशिः। 'कृदिकारादक्तिनः (४, १, ४५ वा०)'—इति ङीष्, वाशी। "ते वाशीमन्त इष्मिणो अभीरवो (१, ६, १२, ६)"—"वाशीभिस्तक्षताश्मन्मयीभिः (ऋ० सं० ८, ५, १९, ४)"—इति च निगमौ ॥

(१२) वाणी †। 'वण शब्दे (भू० प०)'। बाहुलकादिञ् (उ० ४, १२१ । ३, ३, १), ङीष् (४, १, ४५ वा०)। "वाणीः पुपहृतं धमन्तोः (ऋ० सं० १, २, २,१०)"—"अभिवाणीर्ऋषीणां सप्त नूषत (ऋ० सं० ७, ५, ६, २)"—इति निगमौ ॥

(१३) वाणीचो। वाणीं स्तुतिरूपां वाचं अञ्चति गच्छतीति विग्रहः 'ऋत्विगित्यादिना (३, २, ५९) क्विनि न-लोपे, 'अचः (६, ४, १३८)'—इत्यकारलोपे 'अञ्चतेश्चोपसङ्ख्यानम् (४,१,६ वा०)—इति ङीप्। "रथे वाणीच्याहिता (ऋ० सं० ४, ४, १५, ४)"—इति निगमः ॥

(१४) वाणः। वण्यते शब्द्यते वाणः। 'अकर्त्तरि च कारके सञ्ज्ञायाम् (३, ३, १९)'—इति घञ्। यद्वा; वणनं शब्दनं वाणः, भावे घञ् (३, ३, १८), अर्शआदित्वादच् (५, २, १२७)।

---

* ए० ४, ११ निरु० ४, १९,—१९ ।

† निरु० ६ २ ।

स्तुतिमती हि वाक् । "दोना दचा वि दुहन्ति प्र वाणम् (ऋ० सं० २, ६, १२, ४)"— इति निगमः ॥

(१५) पविः * । 'पूञ् पवने (क्रा० उ०)' ; 'अचइः (उ० ४, १३४)'—इति इ-प्रत्ययः । पुनाति हि वाक् । 'पावका नः सरस्वती ( ऋ० सं० १, १, ६, २ )'—इति मन्त्रः । पूयते वा सङ्कीर्तनादिना, 'वाचं मौरिकयालापप्रसङ्गे पुनीमहे' इत्युक्तेः । पूयतेऽनयेति वा शुद्धिकरणं हि वाक् । 'पवित्रं हि वाग् विदुषाम्'—इति माधवः । "वाणस्यं चोदया पविम् ( ऋ० सं० ७, १, ७, १)"—इति निगमः ॥

(१६) भारती † । 'डु भृञ् धारणपोषणयोः (भू० उ०)'; 'भृमृदृशियजिपर्विपच्यमितमिनमिहर्यिभ्योऽतच् (उ० ३, १०७)' । भरतशब्दात् 'प्रज्ञादिभ्यश्च ( ५, ४, ३८ )'—इति स्वार्थिकोऽण् , ङीप् (४, १, १५) । बिभर्त्ति जगदर्थप्रदानेन, स्वाभिधेयं वा भ्रियते प्राणिभिः व्यवहारसाधनत्वेन । अथवा 'अग्निर्भरतः, प्राणो भूत्वा हवींषि बिभर्त्ति'—इति वाजसनेयकम् ; तदीया भारती । तथाच 'अग्निर्वाक् भूत्वा मुखं प्राविशत्'—इत्युपनिषत् (ऐ० उ० १,८) । अथवा 'भरतः ( निघ० ३, १८ )'—इति ऋत्विङ्नाम ; तदीया, स्तुतिसाधनत्वात् भारती । "आ भारती भारतीभिः सजोषा (ऋ० सं० २, ८, २३, ३)"—इति निगमः ॥

(१७) धमनिः ‡ । धमतिर्गतिकर्मा ( निघ० २, १४ ),

---

* ऋ० २, २०. ४, २ । निरु० ३, ५ १२, ३० ।

† निरु० ८, १३ ।

‡ निरु० ६, २४ ।

'अर्त्तिसृधृधम्यम्यश्यवितृभ्योऽनिः (उ० २,८५)'—इत्यनि-प्रत्ययः। गत्यर्था बुद्ध्यर्थाः। गम्यते ज्ञायते अनया अर्थः, ज्ञायते वा विद्वद्भिः साध्वसाधुविभागेन। यद्वा; 'धमति'—इति वधकर्मत्वपि पठ्यते (निघ० २, १८)। हन्तेऽनया शापाक्रोशादिरूपयेति। तथाच 'वज्र एव वाक्'—इति ब्राह्मणम् (ऐ० ब्रा० २, ३, ३)। वाक्सायका वदनान्निःसरन्ति पौराहताः'—इति च महाभारतम्। "इन्द्रेषिता धमनिं पप्रथन्नि (ऋ० सं० २, ६, ४, ३)"—इति निगमः॥

(१८) नाळीः। 'नल गन्धे (भू० प०)'; 'वसिवपियजिराजिव्रजि (उ० ४, १२१)'—इत्यादिना विहितः इञ्-प्रत्ययो बाहुलकात् भवति, 'कृदिकारात् (४, १, ४५ वा०)'—इति ङीष्, अत्ययेन सोर्विसर्जनीयः। 'गन्ध अर्दने (चु० आ०)', 'अर्द हिंसायाम् (भू० प०)'—इति पठ्यते। गन्धनं हिंसात्मकं सूदनम्, सूदयति परमर्माणि। "अ्यमस्य धम्यते नाळीः (ऋ० सं० ८, ७, २१, ७)"—इति निगमः॥

(१९) मेना *। 'मान पूजायाम् (चु० आ०)'—इत्यस्मात् 'बहुलमन्यत्रापि इनच् भवति (उ० २, ४६)'—इति वचनादिनच्, बहुलग्रहणात्र-लोपः। पूज्यतेऽनया गुर्वादिरूपदेशवाक्येन, पूज्यर वा देवतात्वात्। "आम्नेनां सखर्च्युतो मुवद्रीः (ऋ० सं० ८, ६, १०३)"—इति निगमः। 'मेनां गर्जितशब्दम्'—इति माधवः॥

(२०) मेळिः †। सम्पर्कार्थी धातुः (चु० आ०)। पूर्ववत्

* प० ३, २८। निरु० ३, २१। † प० ३, ०।

(१५) करिक्रत् । 'दाधर्त्ति दर्धर्त्ति दर्धर्षि (७, ४, ६५)'—इत्यादि सूत्रेण छन्दोविषयेण करोतेर्यङ्लुगन्तस्य शतरि नुमत्वाभावो ऽभ्यासस्य रिगागमोऽपि निपात्यते । अत्र न्यासः — 'यणादेशे कृते ऋदन्तत्वाभावादङ्गस्याभ्यासस्य रिगागमो न प्राप्नोतीति सोऽपि निपात्यत इति । पुनः पुनः करोतीष्टप्राप्तिमनिवारयन् । निगमोऽन्वेषणीयः * ॥

(१६) चक्रत् । 'डुकृञ् करणे' भूवादिः (उ०) । शतृ । 'जुहोत्यादिभ्यः श्लुः (२, ४, ७५)'—'बहुलञ्छन्दसि (२, ४, ७६)'—इति शपः श्लुर्द्विर्वचनादिः यणादेशः । करोत्यभीष्टम् । निगमोऽन्वेषणीयः ॥ केषुचित् कोशेषु चक्रतुरिति दृष्टम्, निगमदर्शनाभिर्णयः । अस्य स्थाने चर्कृत्यमिति माधवीये दृष्टम् । "चर्कृत्यानि कृण्वतः (ऋ० सं० १, ६, ७, १२)"—इत्यत्र 'कर्माणि चर्कृत्यानि' —इति भाष्यञ्च † ॥

(१७) कर्त्तम् । करोतेः 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)' —इति वन्-प्रत्ययः क्रियते । यद्वा ; 'कृत्यार्थे तवैकेकेन्यत्वनः (३, ४, १४)'—इति त्वन् प्रत्ययः, कृत्यार्थत्वं भावकर्म । "तद्देवानां देवतमाय कर्त्वम् (ऋ० सं० २, ७, १, २)"—इति निगमः । अत्र स्कन्दस्वामि-भाष्यम्—'कर्त्वमिति कर्मनाम'—इति ॥

(१८) कर्त्तोः । करोतेः 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् (उ० १, ६७)—इति बाहुलकात् तुन्-प्रत्ययः । अर्थः

---

* ऋ० सं० २, १, १८, ४. द्रष्टव्य ।

† नैतत् सायणीयम् । तत्र तु 'चर्कृत्यानि कर्त्तव्यानि कर्माणि'—इत्येवमस्ति ।

पूर्ववत्। यद्येकवचनस्य पाठो यथादृष्टम्। "मध्याकर्त्तोर्विततं सञ्जभार (ऋ० सं० १, ८, ७, ४)"—"मध्याकर्त्तोर्न्यधाच्छक्मधीरः (ऋ० सं० २, ८, २, ४)"—इति च निगमौ॥

(१९) कर्त्तवे। करोतेः 'कृत्यार्थे तवैकेकेन्यत्वनः (३, ४, १४)'—इति तवे-प्रत्ययः। 'कृन्मेजन्तः (१, १, ३९)'—इत्यव्ययत्वम्। निगमोऽन्वेषणीयः *॥

(२०) क्रत्वी †। करोतेः 'यः किच (उ० १, ६८)'—इति विधीयमानस्तु-प्रत्ययो बाहुलकाद् भवति। क्रियते क्रतु। 'त्रिल्यायन्ये क्रतुर्यकम् ( ? )'—इत्यत्र माधवेनापि कर्मनामसु पठितः। 'सुपां सुलुक् (७, १, ३९)'—इत्यत्र 'इयाडियाजीकाराणामुपसङ्ख्यानम् (७, १, ३९ वा०)'—इति विभक्ते रीकारादेशः। "त्वं रथ मेतशं क्रत्व्ये धने (ऋ० सं० १, ४, १८, १)"—इति निगमः। अत्र स्कन्दस्वामि-भाष्यम्—'क्रत्वीति कर्मनाम, कर्मणि धने निमित्ते धनार्थं यत् कर्मेत्यर्थः। कर्माच संग्रामः सङ्ग्रामार्थमाजिः स्यात्'—इति। 'क्रत्वी सर्वणामदधर्विवस्वते (ऋ० सं० ७, ६, २३, २)'—इत्यत्र ‡ त्वात्तं तथा स्कन्दस्वामिना व्याख्यातत्वात्॥

(२१) धीः ‡। 'धृञ् धारणे' दिवादिः (उ०)। धारयति कर्त्तारं फलप्रदानेन। यद्वा; दधातेः क्विपि 'घुमास्थागापाजहातिसां हलि (६, ४, ६६)'—इतीत्वे रूपम्। ईत्वञ्च क्विप्यपि * * *। धारयति कर्त्तारमिति पूर्ववद् ददाति वा फलं धीः कर्म।

---

* "कर्त्तवे" ऋ० म० १, ६, १०, २. इत्यादिः।  † निरु० १२, १०।

‡ प० २, ८। निरु० ११, २७, १२, १८; १०।

'दधातेर्निहितं द्रव्येषु तत्'—इति माधवः। यद्वा ; ध्यायतेः सम्प्रसारणत्वे क्विपि रूपम्। ध्यायते चिन्त्यते कर्तृभिरेवं कर्त्तव्यमिति। "धियं धियं सीषधाति प्र पूषा (ऋ० सं० ४, ८, ६,३)" —इति निगमः॥

(२२) शचीः*। 'शच व्यक्तायां वाचि' भ्वादिरात्मनेपदी। 'इन् सर्वधातुभ्यः (उ० ४, ११४)'। 'कृदिकारात् (४, १, ४ वा०)' —इति ङीष्। शचन्ते व्यक्ता वाचः कुर्वन्त्यस्यामिति शची। क्षीरस्वामी तु—'शचति शची; शच श्वच गतौ'—इति व्याख्यत्। गत्यर्थः शचिर्धातुपाठे न दृष्टः। "यद्द्देवयन्त मवथ शचीभिः (ऋ० सं० ५, ५, १६, ४)"—इति निगमः॥

(२३) शमी †। 'शम उपशमे (दि० प०)'; यस्मात् इन्, ङीप् च पूर्ववत्। शम्यत्यनयाऽनिष्टानि। णिजन्ताद्वा पूर्ववत् इन्-ङीपौ। शमयत्यनिष्टव्याध्यादीनि। "शमीमद्दुमंखस्य वा (ऋ० सं० ६, ५, २६, ४)—इति निगमः॥

(२४) शिमी ‡। शमतेः पूर्ववन्निर्वाहोऽयम्। बाहुलकादकारस्येकारः। शक्नोतेर्वा ककारस्य मकारः, षकारस्येकारश्च। शक्नोत्यनेन समानार्थः। "धुनिः शिमीवाञ्छरुमाँ ऋजीषी (ऋ० सं० ८, ४, १४, ५)"—इति निगमः॥

(२५) शक्तिः §। शक्नोतेः 'स्त्रियां क्तिन् (३, ३, ९४)'। शक्यते कर्त्तुं शक्नोति वाऽनया परोन्नोकं जेतुम्। "यजोजनच्छक्तिभी रोदसिप्राम् (ऋ० सं० ८, ४, ११, ५)"—इति निगमः॥

---

* पु० ११। पु० ८० पृ० ७।
† निरु० ११, १९।
‡ निरु० ४, १२।
§ निरु० ७, १८।

(२६) शिल्पम् *। 'शील उपधारणे' † चुरादिः (प०), 'शील समाधौ' भ्वादिः (प०)। अनयोः 'खष्पशिल्पशष्पवाष्परूपसर्पतल्पाः (उ० ३, २६)'—इति प-प्रत्यये णि-लोपे (६, ४ ५१) च उपधाया ह्रस्वत्वं निपात्यते। शीलयति शीलतीति वा शिल्पम्। 'यत् कुम्भकारादि कर्म'—इत्युणादिवृत्तिः। शीलयन्ति पुनः पुनरभ्यस्यन्ति तदिति शिल्पम्। यद्वा; शिनोति शरीरं तनूकरोति दुष्करत्वेनातिक्लेशकरत्वादिति निपातनाद्रूपसिद्धिः। 'शिञ् निशाने (स्वा० उ०)' 'निशानं तनूकरणम्'—इति सुबोधिनीकारः। "यत्ते शिल्पं ‡ कश्यप रोचनावत् (अथ० सं० १३, ३, १०)"—"दिवः शिल्प मवततम् ( ? )"—इति च निगमौ॥

इति षड्विंशतिः कर्मनामानि॥ १॥

तुक्[1]। तोकम्[2]। तनयः[3]। तोक्म[4]। तक्म[5]। शेषः[6]। अप्नः[7]। गयः[8]। जाः[9]। अपत्यम्[10]। यहुः[11]। सूनुः[12]। नपात्[13]। प्रजा[14]। बीजम्[15]। इति पञ्चदशापत्यनामानि §॥ २॥

(१) तुक्। 'तुज हिंसायाम् (भू० प०)', क्विप्। 'तोजति हिनस्ति मातापितरौ गर्भवासादिना। तथाच मन्त्रः—'यदा पिपेष मातरं पितरं पुत्रः ( ? )'—इत्यादिः। 'तुजिर्गत्यर्थः प्रेर-

---

* प० ३, ७। † 'उपधारणमभ्यासः'—इति कौ०।

‡ "चन्द्र"—इति पैप्पलादशाखापाठः। (३) "तनयम्" ग. C. D. F. छ।

(१४) "प्रजा"— । (१५) "बीजम्" ख. nd। § इत्युपदस्य म।

सार्थंय'—इति साधवः । क्विप् । गच्छत्यनेन पितृलोकं पिता, गच्छत्यनेनानृण्यं पितृभ्य इति वा, प्रेर्य्यते प्रसवकाले वायुनापि वा । यद्वा ; 'ष्टुच प्रसादे (भू० आ०)' ; क्विप् , पृषोदरादित्वात् सकारलोपः । प्रसाद्यन्तेऽनेन पिता वा । "तुचे तु नो भवन्तु वरिवोविदः (ऋ० सं० ६, २, १२, ४)"—"तुचे तनाय तत्सु नो (ऋ० सं० ६, १, २८, ३)"—इति च निगमौ । उभयत्र चतुर्थी ॥

(२) तोकम् * । 'तुद व्यथने (तुदा० प०)' ; 'पुंसि सञ्ज्ञायां घः (३, ३, ११८)', 'पृषोदरादित्वात् दकारस्य ककारः । तुदते ऽनेन माता गर्भवासकाले, तुद्यते व्याध्यादिभिरिति वा । यद्वा ; 'ष्टुच स्तुतौ (भू० आ०)' ; 'इगुपधज्ञाप्रीकिरः कः (उ० २,३८)' —इति बाहुलकात् क-प्रत्ययः, स-लोपश्च स्तूयते तोकम् । तथाच हरिश्चन्द्रोपाख्याने "ऋणमस्मिन्सन्नयत्यमृतत्वं च गच्छति (ऐ०ब्रा० ७, ३, १)"—इत्यादिभिर्गाथाभिः प्रशस्यते पुत्रः । यद्वा ; 'तु'—इति सौत्रो धातु र्वृद्ध्यर्थं ; क-प्रत्ययः पूर्ववत् । वर्द्धते हि तत् , वर्द्ध्यते वा मातापितृभ्याम् । यद्वा ; सर्वेभ्य एव धातुभ्यो घञि रूपम् ; अर्थश्च स एव । तुदेस्तु ककारो बाहुलकात् ष्टुचेः सकार-लोपश्च । "मा नस्तोकेषु तनयेषु रीरिषः (ऋ० सं० ५,४,१२,३)" —इति निगमः ।

(३) तनयः † । 'तनु विस्तारे (तना० प०)' ; 'दलिमलि-तनिभ्यः कयन् (उ० ४,९७)'—इति कयन्-प्रत्ययः । कुलं तनोति विस्तारयति । "मा नस्तोके तनये मा न आयौ (ऋ० सं० १,८, ६, ३)"—इति निगमः ॥

---

* निघ० १०, ७ १२ ६। † निघ० १०, ७ १२, ६।

(४) तोक्म। तुजेः, स्तुचेः, तनतेः, तुद्यते वा मनिनि (उ० ४, १४०) ककारोऽन्त्यादेशः, तवतेः कुगागमः पृषोदरादित्वात्। निगमोऽन्वेषणीयः* ॥

(५) तक्म†। तकतेर्गतिकर्मणो (निघ० २,१४) मनिन् (उ० ४, १४०), तुचेर्गत्यर्थाद्वा मनिन् (उ० ४, १४०), अत्वमुकारस्य (६, ३, १०९)। पूर्वेण तुचा समानार्थः। निगमोऽन्वेषणीयः‡ ॥

(६) शेपः §। 'शिष सर्वोपभोगे' चुरादिर्भ्वादिश्च (प०); असुन् (उ० ४, १८४)। म्रियमाणे पितरि कुलसन्तानार्थं परिशेषयति, परिशिष्यते वा पित्रादिभिः सह न म्रियते स्वयमवतिष्ठते इत्यर्थः। यद्वा; 'शिष्लृ विशेषणे' रुधादिः परस्मैपदी; असुन् (उ० ४, १८४)। विशिष्यते पित्रायात्मनोऽतिशयितं करोति हि विद्यादिभिः। 'पुनातु पिता प्रजा मे यतच्छ्रेयसी मात्मनः कुर्वते' —इति ब्राह्मणम्। तथा 'पुत्रमेवैकमिच्छन्त्यात्मनोगुणवत्तरम्' —इति महाभारतम्। यद्वा; 'शिष हिंसार्थः' भ्वादिः परस्मैपदी, शेषति हिनस्ति मातापितरौ। 'यद्वा पिपेष'—इति मन्त्रः पूर्वमेव दर्शितः (१७८ पृ०)। "न शेपे' यस्ते अन्यजातमस्ति (ऋ० सं० ५, २, ६, २)"—"मा शेपसा मा तनसा (ऋ० सं० ४, ४, ८, ४)"—इति च निगमौ ॥

(७) अप्नः‖। कर्मनामसु व्याख्यातम् (२,१.पृ०१७१ प०२) वाहुलकादपत्येऽपि भवति। 'आप्नोते र्हस्वश्च नुट् वा'-इति भोजराजेन

---

* अथनेवास्य निगमोऽभविनुमर्हति—ऋ० सं० ८, २, ३, १।

† निरु० ११, २१।  ‡ अथ० सं० ४, ४, १; ९, निरुक्ते द्रष्टव्यौ।

§ निरु० ३, २।  ‖ पृ० २, १। पृ० १७० प० ७।

कर्माख्यायहणं न कृतम् * । आप्नोत्यनेन सर्वान् , कामान् पिता, आप्यते वा महता पुण्येन । "यच्चित्र मप्न उषसो वहन्ति (ऋ० सं० १, ८, ४, ५)" । 'आप्यम् धनम्'—इति माधवः, अपत्यं भवितुमर्हति ॥

(८) गयः † । गमेः 'अघ्न्यादयश्च (उ० ४, १०८)'—इति यक्-प्रत्ययान्तो निपात्यते, निपातनान्मकारलोपः । 'गाङ् गतौ (भू० धा०)' ; अस्माद्वा यक्-प्रत्यये ह्रस्वत्वम् । गत्यर्थः पूर्व-सूक्तः । गीयते स्तूयते देव-भट्टारकेत्येवमादिभिः । "इन्द्रो वसुभिः परि पातु नो गयम् (ऋ० सं० ८, २, १२, ३)"—इति निगमः ॥ "गयस्फानः प्रतरणस्सु वीरः (ऋ० सं० १, ६, २२, ४)"—इति च । 'गृहापत्ययोर्नाम'—इति हरदत्तः, 'गृहम्'—इति तु माधव ॥

(९) जाः ‡ । 'जनी प्रादुर्भावे (दि० धा०)' ; 'अन्येष्वपि दृश्यते (३, २, १०१)'—इत्यत्र अपिशब्दस्य सर्वोपाध्यव्यभिचारार्थ-त्वात् केवलात्मने डः, टाप् , जस् । जायते मातापितृभ्यां सकाशात् । "सोमः परि क्रतुना पश्यते जाः (ऋ० सं० ७, २, २६, ४)"—"अनमीवो रुद्र जासु नो भव (ऋ० सं० ५, ४, १३, २)" —इति च निगमौ ॥

(१०) अपत्यम् § । अपपूर्वात् तनोतेः नञ्पूर्वात् पतेर्वा 'अघ्न्यादयश्च ((उ० ४, १०८)'—इति यक्-प्रत्ययान्तो निपात्यते,

---

* कौमुद्यान्तु कर्माख्याग्रहणमस्ति (उ० ४, २०२) ।

† प० १०, २, ४ ।     ‡ निघ० २, ६ ।     § निघ० २, १ ।

तनोते ष्टिलोपः। * * *। "कवेरपत्यमा दुहे (ऋ० सं० ६, ७, २५, ३)"—इति निगमः॥

(११) यहुः। यातिह्वयत्योरौणादिके मृगय्वादित्वात् (उ० १, ३६) कु-प्रत्यये निपातनाद्रूपसिद्धिः। यातः प्राप्तः पुण्यवशेन स्वमात्रा ह्वयते च। 'यहुर्यातश्चाहूतश्च'—इति माधवः। "ईशानः सहसो यहो (ऋ० सं० १, ५, २७, ४)"—इति निगमः॥

(१२) सूनुः *। 'षूङ् प्राणिप्रसवे (अदा० आ०)'-'सुवः कित् (उ० ३, ३४)'—इति नु-प्रत्ययः। सूयते माता। "अग्निं सूनुं सनश्रुतं सहसो जातवेदसम् ( ऋ० सं० ३, १, ८, ४ )"—इति निगमः॥

(१३) नपात् †। नञ्-पूर्वात् पतेर्ण्यन्तात् 'बहुलमन्यत्रापि सञ्ज्ञाछन्दसोः (६, ४, ५१ वा०)'—इति णि-लोपः। 'न भ्राण्-पात् ( ६, ३, ७५ )'—इत्यादि सूत्रेण नञः प्रकृतिभावः। न पातयति न तेन पततीत्युक्तम्। "एहि वां विमुचो नपात् (ऋ० सं० ४, ८, २१, १)"—इति निगमः॥

(१४) प्रजा। प्रपूर्वाज्जनेः 'उपसर्गे च सञ्ज्ञायाम् (३,२,९९)' —इति डः, टाप्। "प्रजां देवि दिदिड्ढि नः (ऋ० सं० २, ७, १५, ६ ; ८, १०, २)"—इति निगमः॥

(१५) बीजम्। 'वीज प्रजननकान्त्यसनखादनेषु ( ? )'; इत्यस्मादच्-प्रत्ययः (३,१,१३४)। तथाच भोजराजीये 'वियो जक्' —इति व्युत्पादितम्। बवयोरभेदः। वेति प्रजायते गच्छत्यने-

* निरु० ३, २१ ५, २१ ११, १०।     † निरु० ८, ५।

मानुष्यं पिनेति वा । अत्र क्षीरस्वामी—'वीज्यते वेति वा वीजं वाजिलौकिकः'—इति । 'वीजिः स्यात् प्रेरणक्रिया'—इति माधवः । * * * प्रेर्यते हि कार्यकारणाय वा बीजम् ' यथा धान्यादिवीजमुत्तरोत्तरं स्वाभिवृद्धये भवति एव मपत्यमपि पितृणामभिवृद्धिहेतुरिति बीजमित्युच्यते । "यस्यां बीजं मनुष्या॒ व॒पन्ति (ऋ० सं० ८, ३, २७, २)"—इति । बीजमपत्यार्थमिति दृष्टम् ॥

इति पञ्चदशापत्यनामानि ॥ २ ॥

म॒नु॒ष्याः[१]। नरः[२]। ध॒वाः[३]। ज॒न्तवः[४]। विशः[५]। क्षि॒तयः[६]। कृ॒ष्टयः[७]। च॒र्षणयः[८]। नहुषः[९]। हरयः[१०]। मर्याः[११]। मर्त्याः[१२]। मर्ताः[१३]। व्राताः[१४]। तु॒र्वशाः[१५]। द्रु॒ह्यवः[१६]। आ॒यवः[१७]। यदवः[१८]। अनवः[१९]। पू॒रवः[२०]। जगतः[२१]। त॒स्थुषः[२२]। पञ्चजनाः[२३]। वि॒वस्वन्तः[२४]। पृतनाः[२५]। इति पञ्चविंशतिर्मनुष्यनामानि * ॥ ३ ॥

(१) मनुष्याः † । 'मत्वा कर्माणि सीव्यन्ति (निरु० ३,७)' —इति भाष्यस्य स्कन्दस्वामी–'मत्वेत्यादिना मनेः सीवेश्च द्विधातुजत्वं प्रदर्शयति—ज्ञात्वाऽनेनेदमिति साध्यसाधनभावं कर्माणि

(२), "नपा , धवा । नर " ग । "नरा । नर." C, D F छ ।
(६) "क्षितय "—छ । (९) "नहुषा " ग and छ ।
(१०) "चयन " ग, छ । * "इति मनुष्याणाम्" ग । † निरु० ३, ६ ।

सीव्यन्ति सन्तन्वन्ति, यथा पश्वादयः मनस्यमानेन प्रजापतिना सृष्टाः। मनस्यतिः कस्मिन्नर्थे ? इत्याह—प्रशस्तीभावे, प्रशंसायां मत्वर्थीयः, प्रशस्तं मनः प्रसन्नं सत्वप्राधान्यात् अतः प्रसन्नमनस्केन सृष्टा इत्यर्थः। तथा च श्रुतिः—'स पितॄन् सृष्ट्वा मनस्यदनु मनुष्यानसृजत'—इति। नित्यपक्षेऽप्यसति स्रष्टरि कार्ये सौमनस्यं दृष्ट्वा सृष्टिकारणानुविधायित्वात् कार्यस्य वा। 'मनोर्जातावञ्यतौ षुक् च (४, १, १६१)'—इति वैयाकरणाः। जातिश्च प्रत्ययान्तोपाधिः। मनोरपत्यं जातिश्चेत्येतौ। अपत्यमात्रविवक्षायामन्तरेण च जातिं भवति मानव इति। मनुषो वा अकारान्तमेकं प्रातिपदिकमस्ति, अतस्तदस्मात् व्युत्पादयति ; अञात्प्रत्ययसन्नियोगेन षुगिति कारणान्तरं विनापि प्रत्ययेन षकारान्तप्रयोगदर्शनात्—'समिद्धो अद्य मनुषो दुरोणे (ऋ० सं० ८, ६, ८, १)'—इति पृषोदरादित्वात् सर्वं सिद्धम्। अत श्रीनिवासः—'मनेर्मनुः * * * समिद्धसि मनुषीति। यत्। सा चास्या मनुष्यगोः'—इति। "स्पार्हा वसु मनुष्या ददीमहि (ऋ० सं० २, ६, २०, ४)"—"दैव्याः शमितार आरभध्व मुत मनुष्याः (ऐ० ब्रा० २, १, ६)"—इति च निगमौ॥

(२) नरः *। 'णीञ् प्रापणे (भ्वा० उ०)' ; 'नयतेर्डिच्च (उ० २, ९१)'—इति ऋन्-प्रत्ययः ; अस्। नयन्ति संसारचक्रम्, पदार्थत्वात् देशान्तरं नीयन्ते वा स्थानोत्तरकालेन। यद्वा 'नृती गात्रविक्षेपे (दि० प०)' ; बाहुलकाट्टन् डिच्च। नृत्यन्ति गात्रविक्षेपं

---

* निघ० २, ३।

कुर्वते हि नियमेन गात्राणि विक्षिप्यन्ति कर्मसु तानि कुर्वन्तः। "तं त्वा नरः प्रथमं देवयन्तः (ऋ० सं० ४, ४, ३५, २)"—"त्वां हुवेम्बिन्द्र सत्पतिं नरः (ऋ०सं०४,७,२७,१)"—इति च निगमौ॥

(३) धवाः *। 'धूञ् कम्पने (स्वा० उ०)', 'धुञ्' वा (क्र्या० उ०)। पचाद्यच्। धूनयति * * *। धुनोति स्वावयवान् धवः; जस् धवाः। तद्वा; मनुष्या मत्युतो वेपन्ते। यद्वा; 'धावु गतिशुद्ध्योः (भ्वा० उ०)'; अस्मात् पचाद्यचि (३, १, १३४) पृषोदरादित्वात् (६, ३, १०९) ह्रस्वः। इतश्चेतः शरण्यार्थिनो धवन्ति धवाः। "को वां शयुत्रा विधवेव देवरम् (ऋ० सं ७, ८, १८, २)"—इति निगमः॥

(४) जन्तवः†। 'जनी प्रादुर्भावे (दि० आ०); 'कमिमनिजनिगाभायाहिभ्यश्च (उ० १, ७०)'—इति तु-प्रत्ययः। जायन्ते जन्तवः। "भूरत्यत्रंन्मे मघयत्त जन्तुभिः (ऋ० सं० ८, ७, २८, ४)"—इति निगमः॥

(५) विशः ‡। 'विश प्रवेशने (तु० प०)'; क्विप्। विशन्ति अनु प्रविशन्ति सर्वकर्मस्वधिकारित्वेन। यद्वा; अनुप्रविष्टाः आत्मीयभूराजादेः स्थिता इत्यर्थः। "विशो राजानं सुयं तस्थु ऋग्मियम् (ऋ० सं० ४, ५, १०, ४)"—इति निगमः॥

(६) क्षितयः §। 'क्षि निवासगत्योः (तु० प०)'; 'क्तिच्क्तौ च सञ्ज्ञायाम् (३, ३, १७४)'—इति क्तिच्। क्षियन्ति निवसन्ति

* निरु० २, १४।   † निरु० ४, १९।
‡ प० ९। निरु० १४, ८।   § पु० १, १। १० ९ प० ९।

भूमी गच्छन्ति वा तस्याम् । "अनु क्रोशन्ति क्षितयो भरेषु (ऋ० सं० ३, ७, ११, ५)"—इति निगमः ॥

(७) कृष्टयः * । 'कृष विलेखने (भू० प०)' ; भावे क्तः । कर्षणं कृष्टम् । कर्षणं कर्मविशेषेण चात्र सामान्यतः कर्ममात्रं लक्ष्यते ; कृष्टं कर्म, तदस्यास्तीति 'लुगकारेकाररेफाश्च वक्तव्याः (४, ४, १२८ वा०)'—इति इकार-प्रत्ययः । तथाच भाष्यकारः —'कृष्टय इति मनुष्यनाम' कर्मवन्तो भवन्ति (ऋ० सं० सा० भा० १, ४, ५, १)'—इति । तथाच श्रीभगवद्गीतायाम्—'नैव कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् (म०भा०भी०प० २६अ० ५श्लो०)' —इति । यद्वा ; धातोऽपि कृषि विंपूर्वस्यार्थे वर्त्तते । कर्मणि क्तः । विविधं कृष्टो विक्षिप्तपरिकर्षणयाद्यभिलषितक्रियानुष्ठानसमर्थः कः ? इत्यपेक्षायां विकृष्टदेहत्वं कृष्टसामर्थ्यादिदम् , स एषामस्तीति पूर्ववत्प्रत्ययीयः । तथाच भाष्यम्—'विकृष्टदेहा वा ( ऋ० सं० सा० भा० १, ४, ५, १ )'—इति । 'कृषन्ति प्राप्तं पदाभ्याम्'—इति माधवः । 'कर्षन्ति वशीकुर्वन्ति'—इति भट्टभास्करमिश्रः । "मित्रः कृष्टीरनिमिषाभि चष्टे (ऋ० सं० १, ४, ५, १)"—सद्यश्चिद्यः शवसा पञ्च कृष्टीः (ऋ० सं० ८, ८, ३६, ३)" —इति च निगमौ ॥

(८) चर्षणयः † । चरतेर्धातोः (भू० प०) 'अर्त्तिसृधृधम्यश्यवितृभ्योऽनिः (उ० २, ८५)'—इति बहुलवचनादनि-प्रत्यये पुगागमश्च चरणवन्तः चरणशीलाः । यद्वा ; 'कृषेरादेश्च चः (उ० २,

* निरु० १०, २८ , ११ । † निरु० ३, १० ; १२, ११ ।

८७)'—इति अनि-प्रत्यये कृषेरेतद्रूपम् । 'आकर्षन्ति वशीकुर्वन्ति इत्यर्थः'—इति भट्टभास्करमिश्रः । यद्वा ; चर्षणयः चायितारो द्रष्टारः सर्वेषां पदार्थानाम् । ‡यद्यपि पश्यतिकर्मसु (निघ० २, २) विचर्षणिरिति पठितम् , तथापि 'पिता कुटस्य चर्षणिः (ऋ० सं० १, ३, १३, ४)'—इत्यत्र 'चाययिता द्रष्टा'—इति स्कन्दस्वामिना व्याख्यातम् । "प्र चर्षणिभ्यः पृतनाहवेषु (ऋ० सं० १, ७, २९, १)"—"महाँ इन्द्रो नृवदा चर्षणिप्राः (ऋ० सं० ४, ६, ७, १)" —इति च निगमौ ॥

(९) नहुषः । 'णह बन्धने (दि० उ०)' । 'जनेरुसिः (उ० २, १०८)'—इति बाहुलकात् उस्-प्रत्ययः, 'अस् , नहुषः । नह्यन्ते कर्मभिः पूर्वकृतैः संसारे नह्यन्ति वा नहनीयम् । "सचा सनेम नहुषः सुवीराः (ऋ० सं० २,१,२,३)"—"आ यातं नहुषस्परि ( ऋ० सं० ५, ७, २५, ३)"—इत्यादयो निगमाः ॥

षकारान्तमिदं नाम केषुचित् कोषेषु दृश्यते । तदा 'ऋतन्हिभ्यामुषन् ( ? * )'—इति उषन्-प्रत्ययः । पूर्ववदर्थः । "प्रसक्षाणस्य नहुषस्य शेषैः (ऋ० सं० ४, १, ४, ६)"—इति निगमः ॥

(१०) हरयः † । 'हृञ् हरणे' भ्वादिः, 'हृ प्रसह्यकरणे' जुहोत्यादिः । 'इन् सर्वधातुभ्यः (उ० ४,११४)'—इतीन्-प्रत्ययः । हरन्ति पदार्थान् , प्रसह्यीक्रियन्ते वा मृत्युनेति वा । तथाच मृत्युवाक्यम्—'अहं प्रजायाकुशतोहंरामि'—इति निगमोऽन्वेषणीयः ॥

---

* कौमुद्यान्तु 'ऋतन्हिभ्यामूषन् (उ० ४, ७३)', 'परे कृषन् (७४)', पुरुषि-कलिभ्यउनन् (७५)' एव दृश्यन्ते ।

† पु० १, १५ । पृ० १३९ पं० ३ ।

(११) मर्याः *, (१२) मर्त्याः । 'मृङ् प्राणत्यागे (तु० आ०); अघ्न्यादयश्च (उ० ४, १०८)'—इति यत्-प्रत्ययान्तं निपात्यते, तुडागमस्तु विकल्पेन । गुणः । म्रियन्ते मर्याः । 'छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्य (३,१,१२३)'—इत्यादिना यत्प्रत्ययान्तं निपातितम् । "को नु मर्या अमिमितः (ऋ० सं० ६, ३, ४८, ३७)"—"मर्यांइव कन्यां अश्वचे तं (ऋ० सं० १, २, १३, ५)"—"मर्यंव योषां कृणुते सधस्थ आ (ऋ० सं० ७, ८, १८,२)"—इति निगमाः । यद्वा ; 'मृङ् प्राणत्यागे (तु० आ०)'; इसि सुषिरावामिदमिलुपूधुर्विभ्यस्तन् (उ०३,८१)'—इति तन्-प्रत्ययः। अर्थः पूर्ववत् । मर्त्तशब्दात् 'वत्सशत्त * * * यविष्टेभ्यश्छन्दसि'—इति स्वार्थिकस्तद्धितो यत् । "यो मर्त्येष्वमृतो ऋतावा(ऋ०सं० ३, ४, १६, १)"—इति निगमः ॥

(१३) मर्त्ताः । व्याख्याताः । "मा नो मर्त्ता अभिद्रुहन् (ऋ० सं० १, १, १०, ५)"—"तं मर्त्ता अमर्त्त्यम् (ऋ० सं० ८, ६, २५, १)"—इति च निगमौ ॥

(१४) व्राताः । 'वृञ् वरणे (स्वा० उ०)'; 'तातव्रातलातसुपित्त'—इत्यादि सूत्रेण भोजराजेन क्तप्रत्यये आङागमो निपात्यते । वृण्वन्ति स्वमभिमतं देवताभ्यः तपसाराधितेभ्यः प्रव्रियन्ते वा यज्ञादौ । यद्वा ; व्रातो धान्यादिसञ्चयः । तद्वन्तो व्राताः । मत्वर्थीयोऽकारः । यद्वा ; व्रतमिति कर्मनाम (निघ० २, १) अन्नं वा । अन्नमपि व्रतयितव्यादेवेत्युक्तेः तदीयाः 'तस्येदम् (४,३,१२०)'

---

* निघ० १, १४ ७, २१

—इत्यण् । 'कर्मणा जायते जन्तुः कर्मणैव प्रमुच्यते'—इत्युक्तेः कर्मणामधिकारित्वाच्च मनुष्याणां कर्मसम्बन्धित्वम् । 'अथो अन्नाद् भूतानि जायन्ते जातान्यन्नेन वर्द्धन्ते ( तै० उ० १, २ )'—इति, 'अन्नात् रेतो रेतसः पुरुषः (तै० उ० १, १)'—इति च श्रुतेः मनुष्याणामन्नसम्बन्धित्वम् । "पञ्च जाता अपस्यवः (ऋ० सं० ६, ८, ३, २)"—इति निगमः ॥

(१५) तुर्वशाः * । 'तुर्वी हिंसायाम् (भ्व० प०)' । 'कलिरशच्'—इति बाहुलकात् अशच्-प्रत्ययः । भोजराजीयमिदं सूत्रम् । हिंसन्ति प्राणिनः, हिंस्यन्ते व्याध्यादिभिर्वा । यद्वा ; 'तुर त्वरणहिंसनयोः (दि० आ०)', अस्मात् क्विपि तुर् ; अश्नोतेः पचाद्यच् ; तुर्णमश्नुवते पृषोदरादित्वात् (६, ३, १०९) पूर्वपदस्य ऊरत्वं वकारलोपजनः । तूरूर्णमश्नुते । 'प्राप्यम्'—इति माधवः । यद्वा ; तूर्वशः काम एषामिति तुर्वशाः, पूर्ववत्पूर्वपदस्य ऊरत्वम् । 'वश कान्तौ (अदा० प०)'—इत्यस्मात् 'वशिरण्योरुपसङ्ख्यानम् (३, ३, ५८ वा०)'—इत्यप् । यद्वा ; चतुर्षु धर्मार्थकाममोक्षेषु वश एषामिति चतुर्वशाः सन्तः चकारलोपेन तुर्वशा्वमसम्यहि (ऋ० सं० ५, ७, ११, ४)—इति निगमः ॥

(१६) द्रुह्यवः । 'द्रुह जिघांसायाम् (दि० प०)' ; औणादिकः क्विप् ; द्रोहः । द्रोहं परेषामिच्छन्ति 'छन्दसि परेच्छायामपि (३, १, ८ वा०)'—इति क्यच्, 'क्याच्छन्दसि (३, २, १७०)'—इत्युप्रत्ययः । परहिंसारुचयो हि प्रायेण मनुष्याः । "श्रुष्टिं चक्रुर्भृगवो द्रुह्यवश्च (ऋ० सं० ५, २, २५, १)"—इति निगमः ॥

---

* प० ११ ।

(१७) आयवः *। 'इण् गतौ (अदा० प०)'; 'छन्दसीणः (उ० १, २)'—इत्युण्-प्रत्ययः। गच्छन्ति ग्रामात् ग्रामम्, गमनशीलाः। "बाहुभ्यामग्निमायवोऽजनन्त (ऋ० सं० ७, ६, २, ५)" "आयोर्हं स्कम्भ उपमस्य नीळे (ऋ० सं० ७, ५, ११, ६)"—इति च निगमौ। 'अन्तोदात्त आयुशब्दो मनुष्यवचनः'—इति माधवः॥

(१८) यदवः। 'यमु उपरमे (भ्वा० प०)'; 'यमेर्दुक्'—इति श्रीभोजदेवः। 'अनुदात्तोपदेशवनतितनोत्यादीनाम् (६, ४, ३७)'—इत्यादिना अनुनासिकलोपः। यम्यते नियम्यते आचार्येण अपथप्रवृत्ताः, राज्ञा वा। "यो अस्ति याद्वः पशुः (ऋ० सं० ५, ७, १६, १)—इति निगमः। अत्र माधवः—'यदुषु भवो याद्वो यदुरिति मनुष्यनाम'—इति॥

(१९) मनवः। 'मन ज्ञाने (अदा० प०)'; 'अपाय (उ० १, ८)'—इति विधीयमान उ-प्रत्ययो बाहुलकात् भवति। मन्यन्ते ज्ञानवत्वादेतेषां धर्माद्यनुष्ठानात् प्राणनस्य फलवत्वात् मनन्तीत्युच्यन्ते। इतरे पश्वादयो ज्ञानहीनत्वात् निष्फलप्राणनाः। तथाचोपनिषदि—'तस्य य आत्मानं विस्तरं वेद'—इत्यत्र प्रकरणे ज्ञानवत्वात् पुरुषस्य वैशिष्ट्यं प्रतिपादितम्। "दीधाय विहदनवाय (?)"—इति निगमः। अत्र माधवः—'मनुरिति मनुष्यनाम'—इति। "मनवस्ते रयमश्वाय तक्षन् (ऋ० सं० ४, १, २९, ४)"—इति च। अत्र 'मनवः ऋभवः ते च मनुष्याः'। 'मर्त्तासः सन्तो अमृतत्वमानशुः (ऋ० सं० १, ७, ३०, ४)'—इति श्रुतिः।

* निरु० ८, १ १०, ११ ११, ४८।

तथा ब्राह्मणमपि—'आर्भवं प्रसत्पृभवो व देवेषु तपसा सोम-पीथमभ्यजयन् (ऐ० ब्रा० ३, ३, ५)—इत्यादि, 'तेभ्यो वै देवा अपैवाबीभत्सन्त मनुष्यगन्धात् (ऐ० ब्रा० ३, ३, ५)'—इति च ॥

(२०) पूरवः *। 'पूरी आप्यायने (दि० आ०)'। 'भृमृशीङ्-चरित्सरि (उ० १, ७)'—इत्यादिना बाहुलकात् उ-प्रत्ययः। पूर-यितव्याः कामानां 'रूपूर्थ्यां क्रुः' - इति श्रीभोजदेवः। पूताः शुद्धाः कामार्थिभिरित्यर्थः। "यं पूरवो' वृत्रहणं सचन्ते (ऋ० सं० १, ४, २५, ६)"—इति निगमः ॥

(२१) जगतः †। 'गम्लृ गतौ (भू० प०)'। 'वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च (उ० २, ७८)'—इति क्विप्-प्रत्ययान्तो निपात्यते। प्रत्ययस्यादादेशः, द्विर्वचनं, मकि लोपश्च निपात्यते। गच्छति ग्रामात् ग्रामान्तरम्। "यद्ग्रामयं जगता मिरज्यसि (ऋ० सं० ८, ३, ६, २)"—इति निगमः ॥

(२२) तस्थुषः ‡। 'ष्ठा गतिनिवृत्तौ (भू० प०)'। 'छन्दसि लुङ्लङ्लिटः (३, ४, ६)'। 'क्वसुः (३, २, १०७)'। 'वस्वेका-जाद्घसाम् (७, २, ६७)'—इति इडागमः। 'आतो लोपः (६, ४, ६४)'। 'लिटि धातोः (६, १, ८)'—इति द्वित्वम्। 'शर्पूर्वाः खयः (७, ४, ६१)'—इति थकारस्य शेषः। 'अभ्यासे चर्च (८, ४, ५४)'—इति तकारः। तस्थिवस् इति स्थिते जसः स्थाने व्यत्ययेन शस् (३, १, ८५)। 'वसोः सम्प्रसारणम् (६, ४, १३१)'। 'शासि-

* निरु० ७, २३ ।

† प० ११, १४। निरु० [illegible] १, ७, १२ ८, १२ १२, १८ ।

‡ निरु० १२, १६ ।

वसिष्ठसीनाश्च (८, ३, ६०)'—इति षत्वम्। तिष्ठन्ति स्वस्मिन् धर्मे। "चरन्तं परि तस्थुषः (ऋ० सं० १, १, ११, १)"—इति निगमः। अत्र वाजसनेयभाष्यकृदुवटः 'तस्थुषो मनुष्याः ऋत्विग्यजमाना इत्यर्थः'—इति॥

(२३) पञ्चजनाः*। अत्र भाष्यम्—'तत्र पञ्चजना इत्येतस्य निगमा भवन्ति। "तदद्य वाचः प्रथमं मंसीय०—० जुषध्वम् (ऋ० सं० ८, १, १३, ४)"। तदद्यवाचः परमं मंसीय 'येनासुरानभिभवेम देवाः'। असुरा असुरता स्थानेष्वस्ता स्थानेभ्य इति वापि वासुरिति प्राणनामास्तः शरीरे भवति तेन तद्वन्तः। सोऽदेवानसृजत तत्सुराणां सुरत्वमसोरसुरानसृजत तदसुराणामसुरत्वमिति विज्ञायते। 'ऊर्जाद उत यज्ञियासः'। अन्नादाश्च यज्ञियाश्चोर्गित्यन्ननामोर्जयतीति सतः पक्वं सु प्रवृक्णमिति वा॥ 'पञ्चजना मम होत्रं जुषध्वम्'। गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके, चत्वारो वर्णाः निषादः पञ्चमः इत्यौपमन्यवः। निषादः कस्मात्? निषदनो भवति निषण्णमस्मिन् पापकमिति नैरुक्ताः। "यत्पाञ्चजन्यया विशा (ऋ० सं० ६, ४, ४३, १)"। पञ्चजनीनया विशा, पञ्च पृक्ता सङ्ख्या लिङ्गवचयोगेष्वविशिष्टा†' (निरु० ३, ७-८)'—इति। अस्य स्कन्दस्वामी—'पञ्चजना इत्येतस्य सन्दिग्धस्य विवेकार्थं निगमा भवन्ति सन्देहश्च मनुष्यनामसु पाठात् पञ्चशब्देन समानाधिकरणः। तत्र यदि देवदत्तादि

* निरु० ३, ७, ८. ३, २१।

† 'पञ्च पृक्ता सङ्ख्या स्त्रीपुंनपुंसकेष्वविशिष्टा'—इति निरुक्तपुस्तक-पाठः।

पञ्चक-विषयः स्यात् गन्धर्वादिपञ्चकविषयो वा, न मनुष्यमात्र-नामविषयताऽत्र स्यात्, मनुष्यमात्रनामैतदित्याचार्यमतान्तरप्रदर्शनाय पदद्वयमिदमनुष्यपदार्थे वर्त्तते इति वैचित्र्यप्रदर्शनार्थं उपन्यासः। न मनुष्यनामत्वेन च द्रष्टव्यः।' एकीयमतेन चाष्टौ देवताया उच्यन्ते। तत्र पक्षे नागानां गन्धर्वेषु, यक्षाणामसुरेषु, पिशाचानां रक्षस्वन्तर्भावदृष्टत्वाविरोधात्। तदस्य वाचः। सौचिकस्याग्ने विद्धेपो देवानां संवादो होतृजपपर्यायम्। तत् अद्य अस्मिन् कर्मणि वाचो माध्यमिकायाः प्रथममुत्कृष्टं स्वरमौहवार्थसदनत्व-देवताविशिष्टं मंसीय जानीय। येन अज्ञानेन असुरा यज्ञविघ्नं कुर्वन्तः, हे देवाः! अद्य तानभिभवेम। हे ऊर्जादः। उत अपि यज्ञियासः यज्ञस्य सम्पादयितारः पञ्चजनाः आचार्यमतेन ऋत्विङ्-मनुष्याः। यमस्थपतीष्टौ निषादानां यज्ञसम्पादित्वमस्ति, शूद्रस्याप्योदनसवे; 'आयुरसीति शूद्राय प्रयच्छति, तत्ते प्रयच्छामीति शूद्रः प्रतिगृह्णाति'—इत्येवमादिना। तथा 'दासी पिनष्टि पत्नी वेत्यत्र दास्यादेर्व्यापारादप्येवं यज्ञसम्पादित्वमेकीयमतेन। पञ्च यज्ञाङ्गभूता देवगन्धर्वादय साधनभावेन यज्ञसम्पादिनः। अत उच्यते—'मम होत्रं जुषध्वम्'। होत्र–कर्म जुषध्वम् सम्पादयतेत्यर्थः। अन्ये मन्यन्ते—यदेकीयमतं यच्चौपमन्यवस्य तदुभयमप्याचार्यस्येति। तथा च मन्त्रव्याख्यानम्—पञ्चजातयो ब्राह्मणादयो यज्ञियाः गन्धर्वादयः सर्वेऽपि होतुः सङ्गेन व्यापारेण सेव्यध्वमिति समत्ययासाधारणं मनुष्यमात्रनामत्वेनैव निगमं दर्शयति 'यत्पाञ्चजन्यया विशा'। प्रगाथस्यार्धम्। यत् यदा पाञ्चजन्यया पञ्चजनेषु मनुष्येषु भवया विशेषति पञ्चभिरपि मनुष्यजातैरित्यर्थः'—

इत्यादि। पश्चेति निर्वाच्यम् पृक्तेति निर्वचनम्। सङ्क्षेति विषय-कथनं सम्बन्धवत् सर्वलिङ्गैरित्याह—'लिङ्गत्रययोगेप्यवशिष्टा'—इति। ननु पङ्कादीन्यव्यवशिष्टानि ? उच्यते—प्रत्ययोपात्तरूप-सम्बन्धस्यार्थाभिधानात् यदोष इत्युक्तम्। अपिच या पृक्ता सा पश्चेति किन्तु या पश्च सा पृक्तेति तदन्यत्र एकपदनिरुक्तव्याख्यानम्, यत्पश्चजन्ययेत्यस्य द्वितीयपादादिव्याख्यानं चास्माकमत्रानुपयुक्त-त्वान्न लिखितम्। 'पृची सम्पर्के (रु० प०)'। 'कनिन् युवृषि (उ० १, १५४)'—इत्यत्र प्राक्-प्रत्ययनिर्देशस्याधिकविधयत्वात् कनिनि बाहुलकात् ककारस्याकारो नकार उपजनय। भोज-राजस्तु—'वृषितक्षिराजिधसिपचिभ्रतिहिविभ्यः कन्'—इत्याह, तदा 'पचि विस्तारे ( चु० प० )'—इति धातुः। पकादिभ्यो विस्तीर्णा पञ्चसङ्ख्या। जायन्ते जनाः। पचाद्यच् (३, १, १३४)। 'पञ्चभिर्भूतैर्जाताः पञ्चजनाः'—इति क्षीरस्वामी॥

(२४) विवस्वन्तः *। 'वस निवासे (भू० प०)' इत्यस्मात् 'अन्येभ्योऽपि दृश्यन्ते (३, २, ७५)'—इति विच्, दृशिग्रहणात् भावे भवति। विविधं वसनं विवः, तद्वन्तो विवस्वन्तः। सर्वस्यापि मनुष्यस्य यत् किञ्चित् विवसनमस्ति। 'विवस्वच्छब्द आदित्य-वाच्याद्युदात्तः, अन्यत्र मनुष्यविशेषे यजमाने द्वितीयाक्षरमुदात्तम्'—इति माधवः। "आविर्भव सुकृता विवस्वते ( ऋ० सं० १, २, १२, ३)"—"अग्निर्दूतो विवस्वतः (ऋ० सं० ६, १, २२, ३)"—इति च निगमौ। अत्र विवस्वान् यजमानः'—इति माधव-

* निरु० ७, २६।

भाष्यम् । 'मही जाया विवस्वतीव नाम (ऋ० सं० ७,६,२३,१)' —इत्यादिरेकवचनस्योदाहरणम् ॥

(२५) पृतनाः * । 'पृङ् व्यायामे (तु० आ०)' । "त्वयार्ध्यचिषा पृतना जयेयम् (ऋ० सं० ८, ७, १५, १)"—इति निगमः ॥

मनुष्याणां बहुत्वं, ततो बहुवचनान्तत्वम्, तथा निघण्टुष्वपि । 'मनुष्या मानुषा मर्त्या मनुजा मानवा नराः । स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा विशः (अम० को० २, ६, १)'—इत्यादिषु च बहुवचनान्तता दृश्यते ॥

इति पञ्चविंशतिर्मनुष्यनामानि ॥ २५ ॥

**आयती[1] । च्यवाना[2] । अभीशू[3] । अप्नवाना[4] । विनङ्गृसौ[5] । गभस्ती[6] । करस्नौ[7] । बाहू[8] । भुरिजौ[9] । क्षिपस्ती[10] । शक्करी[11] । भरित्रे[12] । इति द्वादश बाहुनामानि † ॥ ४ ॥**

(१) आयती । 'यती प्रयत्ने (भू० आ०)', गतिकर्मा वा (निघ० २, १४)—'इन् सर्वधातुभ्यः (४, ११४ उ०)'—इतीन्-प्रत्ययः । आभिमुख्येन यतते कार्येषु, गच्छन्तौ वा साधनत्वम् । बाह्वोर्द्वित्वात् सर्वत्र द्विवचनान्तता । निगमोऽन्वेषणीयः ‡ ॥

(२) च्यवाना । 'च्युङ् गतौ (भू० आ०)' । 'सम्यानच् स्तुवः

* निरु० ८, २४ । (३) "अभीषू"—इति क । (८) "बाहू"—इति क ।

(१०) "क्षिपन्ती"—इत्यपि टीकासम्मतम् । "क्षिपंती"—इति क ।

† "इति बाहू" ग । ‡ बहुत्रैवाख्यायतीपद पर सर्वत्रैवाच्छन्तीत्येवार्थघकार सायण ।

(उ० २, ८३)'—इत्यत्र प्राक्-प्रत्ययनिर्देशोऽधिकविध्यर्थं इत्युक्ते-रानच् प्रत्ययः । 'सुपां सुलुक् (७, १, ३९)'—इत्यादिना द्विवचनस्याकारः । गच्छतः कर्मणामन्तः । निगमोऽन्वेषणीयः ॥

(३) अभीशू * । व्याख्यातौ रश्मिनामसु ( ३७ पृ० ) । अभ्यश्नुवाते कर्माणि अभिनयन्तौ वा कर्माण्यतः अभीशाते कर्माणि कर्तुमिति वा । निगमोऽन्वेषणीयः ॥

(४) अप्नवाना । 'आप्लृ व्याप्तौ (स्वा० प०)' ; 'ताच्छील्य-वयोवचनशक्तिषु चानश् (३, २, १२९)', अस्य सार्वधातुकत्वात् श्नुः, 'छन्दस्युभयथा (३, ४, ११७)'—इत्यार्धधातुकत्वात् गुणः, धातोर्ह्रस्वत्वं पृषोदरादित्वात् (६, ३, १०९) । आप्नुतः कर्माणि । यद्वा'; अप्न इति कर्मनामसु व्याख्यातम् (१७१ पृ०) ; तदस्यास्ति 'छन्दसोवनिपौ (५, २, १२२ वा०)'–इति वनिपि विभक्ते राकारः पूर्ववत् , सकारलोपश्छान्दसः । कर्मवन्तौ हि बाहू । नकारान्तौ वेति सन्देहः । निगमदर्शनान्निर्णयः ॥

(५) विनङ्गृसौ । बाहुनाम । विनस्य ग्रसतोऽन्नादिकमिति माधवः । पृषोदरादित्वात् (६, ३, १०९) पूर्वपदे अ-लोपो नुक् ; 'ग्रस अदने (भ्वा० आ०)'—इत्यस्मात् पचाद्यच् ( ३, १, १३४ ), सम्प्रसारणञ्च । "अन्वंसे जोषमभरद्विनङ्गृसः ( ऋ० सं० ७, २, २७३)"—इति निगमः ॥

(६) गभस्ती †। व्याख्यातौ रश्मिनामसु (३७ पृ०) । पुरुषाः अदन्त्याभ्यां सन्नादीन् 'यद्वैगभस्ती बाहू, गृह्णाति पदार्थानाभ्यां

* पु० १, ५ । पृ० ३७ प० १६ । † पु० १, ५, पृ० ३७ प० ६ । प० ५ ।

पुरुषः'—इति माधवः। "शर्यीभि र्न भरमाणो गभस्त्योः (ऋ० सं० ७, ५, २२, ५)"—इति निगमः॥

(७) करस्नौ *। करोतीति कर्मनामसु करशब्दो व्याख्यातः (१७४ पृ०)। तस्मिन् कर्मण्युपपदे 'ष्णै वेष्टने (भ्वा० प०)'—इत्यस्मात् 'आतोऽनुपसर्गे कः (३, २, ३)', 'आतो लोप इटि च (६, ४, ६४)'। 'कर्मणां प्रस्नातारौ (निरु० ६, १७)' वेष्टयितारौ कर्मकरावित्यर्थः। "स्तपकरस्नमूतये' (ऋ० सं० ६, ३, २, ५)" —इति निगमः॥

(८) बाहू †। 'बाहृ लोडने (भ्वा० आ०)'। 'अर्जिदृशिकम्यमिपसिबाधा मृजिपशितुक्धुक्दीर्घहकाराश्च (उ० १, २६)'—इत्युप्रत्ययो होऽन्त्यादेशश्च। गमयत्याभ्यां कर्माणि, बाधते पदार्थानाभ्यामिति वा। "ऋष्वातेन्द्र स्थविरस्य बाहू (ऋ० सं० ४, ७, ११, ३)"—इति निगमः॥

(९) भुरिजौ। 'हृञ् हरणे (भ्वा० उ०)', 'डु भृञ् धारणपोषणयोः (जु० उ०)'; 'भृञ ऊच्च (उ० २, ७१)'—इति इजिप्रत्ययः। हरतो बिभृतो वा पदार्थान् कर्मकरणसामर्थ्यं वा। "तमंश्चन् भुरिजो धिया (ऋ० सं० ६,८,१६,४)—इति निगमः॥

(१०) क्षिपस्ती। 'क्षिप प्रेरणे' तुदादिः (प०); 'वसवित-सेस्तिः ( ? ‡ )'—इति बाहुलकात् ति-प्रत्ययः धातोरसुगागमो गुणाभावश्च। प्रेर्यते कर्मसु पुरुषैः॥ 'क्षिपती'—इति पाठान्तरम्।

* निरु० ६, १७। † निरु० ३, ८।

‡ कौमुद्याम् 'वसेस्ति (उ० ४, १७३)—इत्येवं सूत्रम् 'क्षो रसि (उ० ४, १८०) —इति चापरम्।

तदा शतरि ङीपि 'आच्छीनद्योर्नुम् (७, १, ८०)', 'वा छन्दसि (६, १, १०६)'—इति द्विवचनस्य पूर्वसवर्णः। क्षिपतः पदार्थान् इतस्ततश्च कर्मसु। यद्वा; क्षिपेः 'रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि (उ० ३, १२३)'—इति बाहुलकात् झच्-प्रत्ययः झोऽन्तादेशः। क्षिपतः पदार्थान्। निगमदर्शनाविसंवः॥

(११) शक्वरी*। 'शक्लृ शक्तौ (स्वा० प०)'; 'स्नामदिपद्यर्त्तिपृशकिभ्यो वनिप् (उ० ४, १०९)'—इति वनिप्-प्रत्ययः, 'वनो र च (४, १, ७)'—इति ङीब्रौ च पूर्ववत् पूर्वसवर्णादेशः। शक्नुतः कर्माणि कर्त्तुम्। "अङ्गुलयः शक्वर्यो दिशश्च मे यज्ञेन कल्पन्ताम् (य० वा० सं० १८, २२)"—इति निगमः॥

(१२) भरित्रे। बिभर्त्ति रश्मीनादित्य इव। 'अमित्रादिभ्य इत्रोत्रौ (उ० ४, १६८)'—इति इत्र-प्रत्ययः। भूरिवदर्थः। "अंशुं दुहन्ति हस्तिनो भरित्रैः ( ऋ० सं० ३, २, २०, २ )"—इति निगमः॥

इति द्वादश बाहुनामानि॥ ४॥

अग्रुवः(१)। अण्वाः(२)। व्रिशः(३)। क्षिपः(४)। शर्याः(५)। रशनाः(६)। धीतयः(७)। अथर्यः(८)। विपः(९)। कक्ष्याः(१०)। अवनयः(११)। हरितः(१२)। स्वसारः(१३)। जामयः(१४)।

* प० ११। निरु० १, ८।

(२) इतोऽनन्तरं "विशः"—इत्यधिकं ज पुस्तके। (३) "व्रश." ख, ज।

(८) "अथर्वः."—इत्यपि टीका-सम्मतम्। "अथर्यो." ग. घ. C. D. F।

(१२) इतोऽनन्तरं "रोहित."—इति ग. iid।

सनाभयः[१५]। योक्त्राणि[१६]। योजनानि[१७]। धुरः[१८]। शाखाः[१९]। अभीशवः[२०]। दीधितयः[२१]। गभस्तयः[२२]।

इति द्वाविंशतिरङ्गुलिनामानि * ॥ ५ ॥

(१) अग्रुवः †। 'अग्र्वादयश्च (उ० ४, १००)'—इति रु-प्रत्ययान्तेषु निपातेषु द्रष्टव्यः। 'अगि गतौ (भू० प०)'—इति धातुः; निपातनान्न-लोपः, तन्वादित्वादुवङ्। गच्छन्ति कर्माणि प्रति। यद्वा; अग्र-शब्दे उपपदे गमेः पूर्वनिपातनात् रु-प्रत्यये पूर्वपद-अ-लोपः गमेष्टिलोपश्च। अग्रे गच्छन्ति ताः। "तमीं हिन्वन्त्यग्रुवः (ऋ० सं० ६, ७, १७, ३)"—इति निगमः। अङ्गुलीनां बहुत्वात् सर्वत्र बहुवचनान्तता॥

(२) अण्व्यः ‡। अणतिः शब्दार्थः (भू० प०); 'अणश्च (उ० १, ८)'—इति उ-प्रत्ययः। 'वोतो गुणवचनात् (४, १, ४४)'—इति ङीप्। अणन्ति स्फोटनादि शब्दं कुर्वन्ति, तालादि शब्दं कुर्वन्त्याभिरिति वा। यद्वा; अण्व्यः हस्तपरिमाणापेक्षयाल्पपरिमाणाः। "तमीमण्वीः समर्य आ (ऋ० सं० ५, ७, १७, २)"—इति निगमः॥

(३) व्रिशः। 'विश प्रवेशने (तु० प०)'। 'क्विप् च (३, २, १७८ वा०)'—इत्यत्र 'प्राक् प्रत्ययनिर्देशादिष्टसिद्धिः'—इत्युक्तेः क्विपि रेफ उपजनः विशन्ति साधनभावं कार्येषु। "तमीं"

---

(२२) नास्त्येतत् पदम् क. C. D. F पुस्तकेषु। टीकाकृता तु एतस्य स्थाने केषुचित् "कक्ष्याः"—इति, केषुचित् "[illegible]"—इति च दृष्टम्।

* "द्वाविंशतिरङ्गुलीनाम्" ग। † पृ० १, ११। दु० ११६ पं० १८। ‡ निरु० ६, ११।

हिन्वन्ति धीतयो दश व्रिशः ( ऋ० सं० २, २, १२, ५ )”—इति निगमः। ‘कर्मसु धीयमाना दशाङ्गुलयः’—इति माधवभाष्यम् ॥

(४) क्षिपः। ‘क्षिप प्रेरणे (दि० प०)’ ; औणादिकः क्विप्। क्षिप्यन्ते प्रेर्यन्ते पुरुषेण कर्मसु निक्षिपन्त्याङ्गुलीयकादीन् इति वा। “मृजन्ति त्वा दश क्षिपः ( ऋ० सं० ६, ७, १०, ४ )”—इति निगमः ॥

(५) मर्याः *। ‘मृ हिंसायाम् (क्रया० प्वा० प०)’। ‘अघ्न्यादेराकृतिगणत्वात् यत् (उ० ४,१०८)। मृणाति पापात्। “आ यः शर्याभिस्तुविनृम्णो अस्य (ऋ०सं० ८,१,२६,३)”—इति निगमः ॥

(६) रशनाः †। रश्मिबन्धनार्थो धातुरित्युक्तं रश्मिनिर्वचने (२७ पृ०)। ‘युच् बहुलम् (उ० २, ७४)’—इति युच्। बध्नन्ति बन्धनीयं, बध्यते वाभिरिति वा। युच्-प्रकरणे ‘अशेरश च’—इति श्रीभोजदेवः। अश्नुवते कर्माणि। “रशनाभिर्दशभिरभ्यधीताम् (ऋ० सं० ७, ५, २२, ६)”—“अच्छा वर्हीरशनाभिर्नयन्ति (ऋ० सं० ७, ९, २२, १)” —इति च निगमौ ॥

(७) धीतयः ‡। ‘धी (दि० आ०)’-धातोः ‘स्त्रियां क्तिन् च सञ्ज्ञायाम् (३,३,१७४)’—इति क्तिच् व्यत्ययेन दधातेरपि भवति, ‘घुमास्थागापाजहातिसां हलि (६, ४, ६६)’—इतीत्वम्। धीयन्ते विधीयन्ते पुरुषैः कर्मसु, धारयन्ति कर्मसाधनानि वा। अथवास्त्यर्थो दधातिः। “स समधीतिभिर्हितः (ऋ० सं० ६, ७, ३२, ४)”—इति निगमः ॥

* पा० ४, २। निरु० ५, ४. १०, २९।  † निरु० ३, १४।
‡ निरु० ६, २४. १०, ४१; ११, १८।

[illegible] यते पदार्थं भाभिः, कार्येषु चेतस्या वा । यद्वा; स्व-शब्दे उपपदे 'सृ गतौ (भू०प०)'—इत्यस्माद् बाहुलकादर् बाहुलकात् टि-लोपश्च । स्वं स्वं व्यापारं गच्छन्ति प्राप्नुवन्ति, स्वस्मिन् [illegible] सीदन्तीति वा । यद्वा; परस्पर भगिनीव दृश्यन्ते, [illegible] स्वसार उच्यन्ते 'न षट्स्वस्रादिभ्यः (४,१,१०)' —इति ङीपस्य प्रतिषेधः । 'दुदुहन्ति स्वसारो अर्कपाणम् (ऋ० सं०१,५,२,५)"—इति निगमः ॥

(१४) जामयः ७ , सनाभयः । जामयो———जामयोः [illegible]। जमतेर्गतिकर्मणः (निघ०२,१४) 'अजिपसिभ्यमिण् (उ० ४,१२६)—इति बाहुलकादिण् प्रत्ययः । 'भलिशलिपलिपास-[illegible]' इति भोजदेवः । जमन्ति गच्छन्ति कर्माणि प्रति [illegible] दीनि वा । जमेरेव वा बाहुलकात् [illegible] मकार , [illegible] कारणात् । "त्वं [illegible] जामयः (ऋ०सं० ६,८,१६,५)'—इति निगमः ॥

(१५) सनाभयः पुं । 'णह बन्धने (दि०उ०)'; नहो भश्च (उ० ४,१२२)'—इति इञ्-प्रत्ययः भोऽन्त्यादेशः । [illegible] गर्भ इति नाभि, सम ना नाभिरासामिति सनाभयः । ज्योतिर्जनपदेत्यस्मात् [illegible] स भाव. । समाना हि मातुर्नाभिरासां, समा नाभि, मूलमासामिति । "सनाभयो वाजिनं मूर्जयन्ति (ऋ०सं०७,१, २५,४)"—इति निगमः ॥

---

* [illegible]

[illegible]

(१६) योक्त्राणि *। (१७) योजनानि †। 'युजिर् योगे (रु० उ०)'। 'दाम्नीशसयुयुजस्तु०' (३,२,१८२)'—इति ष्ट्रन् प्रत्ययः पूर्वंच। 'युच् बहुलम् (उ०२,७४)'—इति युच्। युज्यन्ते पदार्थानाभिरिति, युक्ता वा हस्तेन संयम्यन्ते याभिः क्रोशादय इति वा। शब्दस्वाभाव्यात् नपुंसकलिङ्गता। "दशयोक्त्रेभ्यो दशयोजनेभ्यः (ऋ०सं०८,४,१०,२)"—इति निगमः॥

(१८) धुरः ‡। धुर्वतेर्वधकर्मणः (निघ०२,१८) कर्त्तरि क्विपि (३,२,१७७), राल्लोप (६,४,२१)' इति व्लोपे रेफस्य विसर्जनीयः, जसि धुरः। धूर्वन्ति घ्नन्त्युपद्रवान्ति कर्मणोत्यर्थः। हिंसन्ति परानाभिरिति वा। धारयतेर्वा औणादिके क्विपि वाहुलकात् आकारस्य उकारः। अनड्वान् हि धुर्यं सुवर्णादि धारयति। 'दश धुरो दश युक्ता वहद्भ्यः (ऋ०सं०८,४,१०,२"—इति निगमः॥

(१९) शाखाः §। 'शाखृ व्याप्तौ (भ्वा०प०)'; अस्मात् खप्रत्यये विहिते 'शखोतडित्,—इति यौगोजदेवेन ख-प्रत्यये शाख-शब्दो व्युत्पादितः। व्याप्ता हि सर्वम्। ख शब्दाधिकरण उपपदे शेतेः 'अधिकरणे शेतेः (३,२,१५)'—इति अच्-प्रत्ययः। अङ्गुली हि हस्ताग्रभागवात् खे आकाशे शेरते व्यातिष्ठन्ते, आकाशस्थावकाशरूपत्वात् उपपन्नं हि तत्र शयनम्। खशयाः सत्यः पृषोदरादित्वात् (६,३,१०९) यकारलोपेन शकाराकारयोः सवर्णदीर्घे खशा इति भवति, सतोऽक्षरद्वयस्य च विनिमये, टाप्; शाखा। शक्नोतेर्वा पचाद्यचि (३,१,१३४ उपधादीर्घः, ककारस्य खकारः।

*, †, ‡—निघ० २, ८। §निघ० १, ५ ६, २३।

शक्नुवन्ति हि ता अङ्गुलयः पुस्तकादि धारयितुं कार्याणि कर्त्तुं वा। यद्वा; 'शाखृ व्याप्तौ (भू०प०)', पचाद्यच् (३,१,१३४)। शाखन्ति व्याप्नुवन्ति कर्माणि। यद्वा; 'शीङ् स्वप्ने (अदा०आ०); अस्मात् 'हस्तावयवाख'— इति ख-प्रत्ययो बाहुलकात् हस्तावयवेऽपि भवति। शेरतेऽवतिष्ठन्ते आसु मख दयः इति शाखाः। 'शयते रिच वा'—इति श्रीभोजदेवः; ख-प्रत्ययोऽधिकृतः, इकारादेशस्य विकल्पितत्वात् पक्षे शाखाभिख्या ——— शाखास्यामोयत्वाद्वा शाखा इत्यन्ते तथाचामरसिंह' —'अङ्गुल्य' करशाखाः स्युः (२,६,८२)'—इति। 'हस्ताभ्यां दशशाखाभ्याम् (ऋ०सं०८,७,२५,७)"—इति निगम ॥

(२०) अभीशव.७०। व्याख्याता रश्मिनामसु (२ पृ०)। अश्नुवते कर्माणि, अभीशते वा कर्माणि कर्त्तुम्। "दशाभीशुभ्यो अर्चता जरेभ्यः (ऋ०सं०८,४,३०,२)" इति निगम ॥

(२१) दीधितयः † । व्याख्याता रश्मिनामसु (३८पृ०)। अङ्गुरीयकादिधारणाद् दीप्यन्ते। दीव्यन्ति क्रीडन्त्याभिरिति वा दधातेर्व्युत्पन्नो दीधिति शब्दः। "अग्नि नरो दीधितिभिररण्योः (ऋ०सं०५,१,२३,१)"—इति निगम ॥

(२२) गभस्तय. ‡। व्याख्याता रश्मिनामसु (३७पृ०)। गृह्णन्ति पदार्थानाभिः पुरुषा इति गभस्तयः। "दीप्यते मघो रंशयु गभस्तिभि ( ? )"—इति निगम ॥

"सुहस्त्याः"—इति केचित्।

---

* पु० १, ५। पृ० २० प० १६। † पु० १, ३। पृ० ३८ प० ४।

‡ पु० १, ५। पृ० ३८ पु० १६।

एतस्य स्थाने "सखुतः"—इति च केचित् पठन्ति। तच्च व्याख्याता नदीनामसु (१४४पृ०)। संसरन्ति सच गच्छन्ति कर्माणि प्रति सक्ता वा। स्पष्ट-निगमदर्शन विमर्शयः॥

इति द्वाविंशतिरङ्गुलिनामानि॥ ५॥

वश्मि(१)। उश्मसि(२)। वेति(३)। वेनति(४)। वेसति(५)। वाञ्छति(६)। वष्टि(७)। वनोति(८)। जुषते(९)। हर्यति(१०)। आचके(११)। उशिक्(१२)। मन्यते(१३)। छन्त्सत्(१४)। चाकनत्(१५)। चकमानः(१६)। कनति(१७)। कानिषत्(१८)। इत्यष्टादश कान्तिकर्माणः *॥ ६॥

'कान्तिकर्माणः (निरु० २,६)'—इच्छार्था धातवः—

(१) वश्मि †। 'वश कान्तौ' अदादिः परस्मैपदी। लड्-उत्तमैक-वचनम्। "तदहं वश्मि पवमान सोम (ऋ०सं०७,४,६,४)"—इति निगमः॥

(२) इतोऽनन्तरम् "वष्टीति"—इत्यधिकं ग C D F ङ पुस्तकेषु।

(५) "विमति" ख। "वेशति" च। टीकाकृतापि पाठान्तरतया स्वीकृतम्।

(७) 'वेष्टि' ङ।

(१०) इतोऽनन्तरम् "ईर्यति"—इत्यधिकम् ख पुस्तके।

(११) "चचके" ख ग, C. D. F. पुस्तकेषु नास्त्येवेदम् पदम्।

(१३) "मंन्यते" ङ। (१७) "कनन्" C. D. F ङ पुस्तकेषु।

* "इति कान्तिकर्माण." ग।

† निरु० १९, २।

(८) वनोति। 'वनु याचने' तनादिः (प०). अनेकार्थत्वाद्धातू-नामत्र कान्त्यर्थः। एवमन्यत्रापि। "स्याहं यद्रेक्ण परमं वनोमि नत् (ऋ०सं० १,२,२४ ४)" – इति निगमः॥

(९) जुषते *। 'जुषी प्रीतिसेवनयोः' तुदादिरात्मनेपदी, अत्र कान्तिकर्मा। "स पुष्टिं याति जोषमा चिकित्वान् (ऋ०सं० १, ५ २५,५)"-इति निगमः। 'जुषते हर्यति इति पाठात् जोषः कामः'— इति स्कन्दस्वामिभाष्यम्॥

(१०) हर्यते †। 'हर्य गतिकान्त्योः' भ्वादिः परस्मैपदी। "ता जुषाणो हर्यति जातवेदाः (ऋ०सं० ३,८,११,१)"— इति निगमः॥

(११) चायके। 'चक तृप्तौ' भ्वादिरात्मनेपदी; लडुत्तमपुरुषैकवचनम्। "मनाम्योज चा चके (ऋ०सं० ३,४,९,५,)"— इत्यत्र 'कर्मणि लिटि उत्तमे इटि मलोपश्छान्दसः'— इति भानुदत्तः। "यस्मै मनस्वराचके (ऋ०सं० १,२,१९,४ "— इति निगमः। "लोपस्त आत्मनेपदेषु (७ १,४१)' । यथादृष्ट पाठः॥

(१२) उशिक् ‡। वष्टेः 'वशः कित् (उ० २ ६८)'-इति इक् प्रत्ययः, कित्त्वात् सम्प्रसारणम्। "उशिक् पावको अरतिः सुमेधाः (ऋ०सं० ७,८,२,९,१)"- इति निगमः॥

---

* निरु० ६. १६. १२. ४२।

† प० १४। निरु० ३. १०. ७, १०. ११, ११।

‡ प० ३. १३। निरु० ६, १०।

(१३) मन्यते * । 'मन ज्ञाने' दिवादिरात्मनेपदी । "आवयिद्य मन्यमानस्तुरयित् (ऋ०सं ५,४,८,२)"—"यदि मन्यतेऽपसुस्मि योदनैः ( ? )" —इति च निगमौ ॥

(१४) छन्त्सत् † । 'छदि संवरणे' चुरादिः । पञ्चमलकारः, तिप्, 'लेटोऽडाटौ (३,४,९४)', 'सिब्बहुलं लेटि (३,१,३४)', 'इतश्च लोपः परस्मैपदेषु (३,४,९७)' । "तया छन्दुर्भवति च्चयेतः (ऋ०सं० १,४,१९,४)'—इत्यत्र 'मत्यैः छन्त्सत् चाकनत्' इति आम्नि-कामेसु पाठात्, 'तदिमे छन्त्सद् वपुषः (ऋ०सं० ७,७,२९,३)'— इति प्रयोगदर्शनाच्च छदिः कान्त्यर्थः'—इति स्कन्दस्वामिभाष्यम् । "दूरेवताय छन्त्सत् (ऋ०सं० २,१,२१,६)"—इति, "अच्छान्त्सुः पञ्चक्षयः (ऋ०सं० ८,६,२६,६)"—इति च निगमौ ॥

(१५) चाकनत् ‡ । 'कनी दीप्तिकान्तिगतिषु (भू०प०); यङ्-लुगन्तः । 'गुणतोऽनुनासिकान्तस्य न भवति, व्यत्ययेन पञ्चमलकारः, 'लेटोऽडाटौ (३,४,९४)', 'इतश्च लोपः परस्मैपदेषु (३,४,९७)' । "ब्रह्मद्विष्टस्य चाकनत् (ऋ०सं० ६,२,३८,१)" —"ये भिः प्रचित चाकनत् ( ? )"—इति च निगमौ ॥

(१६) चकमानः । 'चकु तृप्तौ' भ्वादिरात्मनेपदी । 'ताच्छी-ल्यवयोवचनशक्तिषु चानश् (३,२,१२९)' । "चकमानः पिबतु दुग्धमंशुम् (ऋ०सं० ४,२,७,१)"—इति निगमः ।

---

* प० ३, १४,—१९ । निरु० ३,१ १,८ ४, १२ ६, २१ ८, १२ ९, ३१. ११, १०. ११, ४२ ।

† प० ३, १४ । निरु० ९, ८ ।

‡ प० ३, ११ ४, १,—२ । निरु० ३, १४,—११. ५, १४ ।

(१७) कनति * । 'कनी दीप्तिकान्तिगतिषु (भू०प०)' भ्वादिः परस्मैपदी । "मानस् कनति सुदत्तम् ( ·? )"—'इन्द्रः सोमस्य काणुका (ऋ०सं० ६,४,२८,४)"—इति च निगमौ ।

(१८) कानिषत् † । कनतेर्लेटि परस्मैपदप्रथमपुरुषैकवचने सिब्बहुलं लेटि, इडागमः, उपधावृद्धिर्बाहुलकात् इकारलोपः पूर्ववत् । "अग्ने तृतीये सवने हि कानिषः (ऋ०सं० २,१,२१,५)"—इति निगमः ॥

इत्यष्टादश कान्तिकर्माणो धातवः ॥ ६ ॥

अन्धः(१) । वाजः(२) । पयः(३) । प्रयः(४) । पृक्षः(५) । पितुः(६) । वयः(७) । सिनम्(८) । अवः(९) । क्षु(१०) । धासिः(११) । इरा(१२) । इळा(१३) । इषम्(१४) । ऊर्क्(१५) । रसः(१६) । स्वधा(१७) । अर्कः(१८) । क्षद्म(१९) । नेमः(२०) । ससम्(२१) । नमः(२२) । आयुः(२३) । सूनृता(२४) । ब्रह्म(२५) । वर्चः(२६) । कीलालम्(२७) । यशः(२८) । इत्यष्टाविंशतिरन्ननामानि‡ ॥७॥

---

*, † पुरस्तात् पत्रे १५ । पृ० १०९ पं०१२ ।

(२) एतोऽनन्तर "पाजः"—इत्यधिकम् ग C D F पुस्तकेषु ।

(४) "प्रय" — इत्येतत्पाठस्तु ग पुस्तकातिरिक्तेषु, देवराजेन तु "प्रयः"— इत्येवमस्य विकल्पः स्वीकृतः ।

(७) "वयः" नास्त्येतत् ख- ङ- च पुस्तकेषु । तेषु पुनरस्यैव स्थाने "सुतः"—इति दृश्यते, टीकाकारा अपि केचिदित्यायुस्य ऽन्नमतान्तरतोऽमा । ग. C. D F पुस्तकेषु तु "सुतम्" इति । एतोऽनन्तर "सुतः"—इत्यधिकम् च पुस्तके । (९) "श्रोमम्" ग, घ ।

(११) "क्षुमत्" ग, ङ- "क्षुत्" C. D. F,-च । (१८) नैतद् दृश्यते क-पुस्तके ।

(१९) "क्षद्म" घ । (२८) नास्त्येतत् पदं ग, C. D. F पुस्तकेषु । ‡ 'प्रत्यक्ष' ग ।

(१) अन्धः * । 'अन्धइत्यन्ननाम । आध्यानीयं भवति (निरु० ५,१)'—इति भाष्यम् । 'आभिमुख्येन हि ध्यातव्यं सर्वेषामन्नं प्रीतेः शरीरस्थितेश्च तदायत्तत्वात्'—इति स्कन्दस्वामी । आङ्-पूर्वात् ध्यायतेरसुनि बाहुलकात् यकाराकारयोर्लोपः, उपसर्गस्य ह्रस्वत्वं नुडागमश्च धातोः । यद्वा; 'अद भक्षणे (अदा०प०)'—इत्यस्मात् 'अदेर्नुट् धश्च (उ० ४,२००)'—इति कर्मणि कर्त्तरि वा कारके असुनि नुमागमो धकारश्चान्तादेशः । अद्यते प्राणिभिः, तान् वा स्वयमत्ति । तथाच श्रुतिः—'अद्यतेऽत्ति च भूतानि (तै०उ० २,२)'—इति । 'अनित्यनेनान्धः'—इति क्षीरस्वामी । अनितेरसुनि बाहुलकात् धुगागमः । अनित्ययं हि प्राणनम् । "आमत्रेभिः सिञ्चता मद्यमन्धः (ऋ०सं० २,६,१२,१)"—"इन्द्रेहि मत्स्यन्धसः (ऋ०सं० १,१,१७,१)"—इति च निगमौ ॥

(२) वाजः † । 'वज गतौ (भ्वा०प०)' । 'अकर्त्तरि च कारके संज्ञायाम् (३,३,१९)'—इति घञ् । 'अजिव्रज्योश्च (७,३,६०)'—इति चकारस्यानुक्तसमुच्चयार्थत्वात् कुत्वाभावः । तथाच तत्र न्यासकारः—'चकारस्यानुक्तसमुच्चयार्थत्वाद्वजेरपि कुत्वप्रतिषेधः सिद्धो भवति वाजः'—इति । निगम्यते अभिगम्यते हि तत्सर्वैः । गच्छत्यनेनादत्तेन सुखानि भुक्तेन स्वर्गं वा गच्छत्यनेन शुद्धेन सत्त्वशुद्धिं भोक्ता । यदाहुः—'आहारशुद्धौ सत्त्वशुद्धिरिति' । यद्वा; गत्यर्था बुद्ध्यर्थाः जानात्यनेन भुक्तेन धर्मम् । 'दश धर्मान् विजानन्ति धृतराष्ट्रनिबोधनात् । मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः'

---

* प० ४,२ । निरु० ५ १.६, २६. ११, ८ ।

† प० १७ । निरु० १०, २२ ११, १६,—१६ ।

—इति श्रीमहाभारतम्। सर्वान्ननामसु गत्यर्थाद् व्युत्पादितेर्वेव मर्यो बोद्धव्यः। "सुतानां वाजिनीवसू (ऋ०सं० १,१,३,५)"— अन्यत्र "वज्रं हवनश्चदं रथम् (ऋ०सं० १,४,१२,१)"— इति च निगमौ ॥

(३) पयः *। व्याख्यातं रात्रिनामसु पयइत्यत्र (निरु० २,५)। यद्वा ; 'पय पय गतौ (भू०आ०)'—इत्यस्मादसुन्। पीयते ह्यत्रं। तद्धि चतुर्विधम् पेय-चोष्य-लेह्य-चर्व्यभेदेन। वर्द्धन्ते हि तेन भुक्तेन। जातान्यन्नेन वर्द्धन्ते (तै०उ०२,२)' - इति श्रुतिः। "पयस्वानग्न आगहि (ऋ०सं० १,२,१२,३)"—"यदो सुतस्य पयसा पिपानः (ऋ०सं० १,५,२७,३)"—इति च निगमः ॥

(४) प्रयः †। व्याख्यातमुदकनामसु (११७पृ०)। "उपप्रयोभिरागतम् (ऋ०सं० १,१,३,४)"—"तुराय प्रयोन हमि स्तोमं माहिनाय (ऋ०सं० १,४,१७,१)"—"प्रयस्वन्तः प्रति हर्यामसि त्वा (ऋ०सं० ८,६,२१,३)"—इति च निगमाः ॥

(४) यवः। 'यु यवणे (भू०प०)'। कर्मण्यसुन्। यूयते ह्यत्रं वर्ध्यमानं यवो ययः। तद्धर्मात्साच्छ्रयं वा। "सत्यमित्र यवसमाः ( ? )"—"मर्त दधामि यवसे दिवे दिवे (ऋ०सं० १,२,१३,२)"—प्रभियव कन्यसः (ऋ०सं० ४,७,८,३)"—इति च निगमाः। "उप प्रयोभिरागतम् (ऋ०सं० १,१,३,४)"-इत्यादिषु निरुक्त-टीकायां स्कन्दस्वामिना प्रयइत्यन्ननामेत्युच्यते। तथाच 'अचिति यवः (ऋ०सं० १,३,२०,४)'—इत्यादि-निगमेषु वेदभाष्ये,

* ए० ११. ९,७। निरु० २,५।

† प० १० । निरु० ६,२८. ९, १०. १०, १ ११,९।

'अव इ.यवन म'—इति स्पष्ट मुच्यते। निरुक्त-टीकायामुभयथा (निरु० १०,१)। अतः 'अय.'–'अव:'-शब्दयोः उभयोरप्यन्ननामत्वं स्पष्टम्। तत्रैकतमश्च पाठो विद्वद्भिर्निर्णीयताम् ॥

(५) पृक्षः *। 'पृची सम्पर्के (रु०प०)'। श्रौणादिके क्सिपि धातोः कुगागमः। सम्पृक्तं हि तज्जन्नार्थिभिः। पृक्षतिर्दानार्थ इति वा (अदा० आ०)। "वायो तव प्र पृञ्चती (ऋ०सं० १,१,२,२)"–इत्यादौ माधवेनोक्तम्। तत्र क्विपि बाहुलकात्-लोपः। दीयते ह्यन्नमर्थिभ्यः। "त्रिः पृक्षो अश्वि अश्वेव पिन्वतम् (ऋ०सं० १,३,४,४)"—इत्यत्र स्कन्दस्वामिभाष्यम् 'पृक्षा अन्नानामेतत् पठन्ति। "पृक्षो भवन्त वाम् (ऋ०सं० ४,४,१२,३)"—इत्यादिषु बहुवचनान्तस्य सामानाधिकरण्यदर्शनात् बहुवचनान्तं द्रष्टव्यम्'-इति। "अग्निं विश्वा अभि पृक्षः सचन्ते (ऋ०सं० १,५,१६,२)"—"पृक्षो वहतमश्विना (ऋ०सं १,४,२,६)"—इति च निगमौ। "त्वं अग्नो मारुतं पृक्ष ईशिषे (ऋ०सं २,५,१८,१)"—इत्यादौ तु पक्षेरकवचनान्तमपि दृश्यते ॥

(६) पितु †। 'पा रक्षणे (अदा०प०)'। 'कमिमनिजनिभाया-मायाहिभ्यश्च (उ० १,७०)'—इति तु-प्रत्ययो बाहुलकादिकारः। रक्षितश्च ह्यन्नम्। प्यायतेर्बाहुलकात् तु-प्रत्ययो धातोः पि-भावश्च। "पितुं नु स्तोषम् (ऋ०सं २,५,६,१)"—"अमन्दिन्ने पितुमद्-वचता वचः (ऋ०सं १,७,१२,१)"—इति निगमौ ॥

(७) वयः ‡। 'वी गतिप्रजनकान्त्यशनखादनेषु (अदा०प०)'।

---

* परस्मात् १७। † निघ० ५, ४। निरु० ८, २४।
‡ निरु० ६, ४।

यसुन्। गत्यादिसर्वोऽप्यर्थोऽत्रानुगुणः कारकभेदेन। 'वय गतौ (भू०आ०)'-इत्यस्मादसुन् वा। "इह्वदक्षो वय इन्द्रो दधाति (ऋ०सं० २,१,१०,२)"—"परि घंसमोमना वां वयोगात (ऋ०सं० ५,५,११,४)"—इति च निगमौ॥

केचिदस्य स्थाने "सुतः"* -इति पठन्ति। तत्र 'षुञ् प्राणिप्रसवे (अदा०आ०)'। 'तातनातलातसुत'-इत्यादिना क्त-प्रत्ययः, गुणो क्रत्वञ्च निपात्यते। सूयते हव्या। "आदित्याज्जायते वृष्टि र्वृष्टे-रन्नं ततः प्रजाः"—इति हि स्मृतिः (मनुः ३,७६)। यद्वा; 'षु मु गतौ (भू०प०)'-इत्येतद्-विषयं निपातनम्। निगमोऽन्वेषणीयः॥

(८) सिनम्† । 'षिञ् बन्धने (स्वा०क्र्या०उ०)'। 'इण्सिञ्-दीङ्‌ष्यविभ्यो नक् (उ० ३,२)'। 'सिनाति भूतानि'-इति भाष्यम्। 'सिनाति बध्नाति क्षुधा विनश्यन्ति भूतानि धारयति'-इति, स्कन्द-स्वामी। सीयते धनेनेति वा। धनेन हि भृत्यादयो बध्यन्ते। "येन मासिनं स्वानं मरुद्. सखिभ्यः (ऋ०सं० १,४,८,१)"-इति निगमः॥

(९) अवः‡। 'अव रक्षणगतिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु (भू०प०)'। असुन्। धात्वर्थेषु योगः सर्वोऽङ्गीकर्त्तव्यः। "अवत् ब्रह्मण्यवसा-गमत ( ? )"—"अविर्गिरोऽवसा वेतु धीतिम् (ऋ०सं० १,५,२५,४)"—इति निगमौ॥

(१०) क्षु। 'टु क्षु शब्दे (अदा०प०)'—'क्षि निवासगत्योः (तु०

* निरु० ३,१८;—२१। † प० ७, २। निरु० ३, २१।
‡ निरु० १०, ३१।

प०)'। 'क्षुनिषूभ्यां डिच्च (उ० १,२२)'—इति विधीयमानौ डित्-कु-प्रत्ययौ बाहुलकादाभ्यामपि भवति। क्षूयते शस्यते स्तोतृभिः स्तूयते देवतात्वादन्नम् मन्त्रादिभिः गुणवत्तया वा लोकैः, निवसत्यनेन वा। "त्वं वाजस्य क्षुमतो राय ईशिषे (ऋ०सं० २,५,१८,५)"—"आ तू न इन्द्र क्षुमन्तम् (ऋ०सं० ६,५,२७,१)"—इति च निगमौ॥

(११) धासिः। 'प्रुषिशुषिकुषिभ्यः क्सिः (उ० ३,१५१)'—इति बाहुलकात् धाञोऽपि भवति, बाहुलकादेव ईत्वं न भवति। धीयते ऽर्थिभ्यो धारयति प्राणान् वा। "विदत्स्वर्मा तनयाय धासिम् (ऋ०सं० १,५,१,३)"—अत्र 'धासिरन्ननाम, इह तु पयस आसन्नकारणत्वात् गोषु प्रयुक्तः'—इति स्कन्दस्वामी॥

(१२) इरा। व्याख्यातं नदीनामसु (१४६ पृ० १८ प०)॥

(१३) इळा*। ईड्यते दीप्यते भुक्तेन जाठरोऽग्निः, क्षिप्यते उदरे, स्वपित्यनेन भुक्तेन न हि बुभुक्षितस्य निद्राऽस्ति। "तस्मा इळां सुवीरा मा यजामहे (ऋ०सं० १,३,२०,४)"—इति निगमः॥

(१४) इषम्†। 'इषु इच्छायाम् (तु०प०)'। औणादिकः क्विप्। इष्यत इति। यद्वा; 'इषु गतौ (दि०प०)' क्विप्। वेदे प्राचुर्येण दर्शनाद् द्वितीयैकवचनान्तम्। "इषं स्तोतृभ्य आभर (ऋ०सं० ३,८,२२,१)"—"अश्विना यज्वरीरिषः (ऋ०सं० १,१,५,१,)"—इति च निगमौ॥

(१५) ऊर्क्‡। 'ऊर्गित्यन्ननाम। ऊर्जयतीति सतः पक्वं सुप्रवृक्णमिति वा (निरु० ३,८)'—इति भाष्यम्। 'ऊर्जयति' प्रवलति

---

* पुरस्तात् १, १ पृ०१३ प०६। † निरु० ६, २६ १०, २६ ११, १७, —२९।
‡ निरु० ३, ८ १०,—४२ ११, ८९।

प्राणयति बलवन्तं प्राणवन्तं वा करोतीत्यर्थः। 'पक्कमिति वा' पक्क-शब्दस्य पकारलोपं कृत्वा क-शब्दं व्यत्यय वकारस्योरि कृते ऊगा-गमे चोर्गिति भवति। 'सुपक्कमिति वा' अत्रे र-शब्दलोपे कृते, संयोगादिलोपे ऊ ोचक र योपरि कि ऊत्वे च कृते ऊर्गिति भवति। मुष्टिदं हि तद्भवति सृदत्वात्' इति स्कन्दस्वामिपन्थः। * * *। 'ऊर्ज्यते प्राण्यते जीव्यतेऽनया'—इति भट्टभास्करमिश्रः। अत्र 'ऊर्ज बलप्राणनयोः (चु०प०)' इत्यस्मादेव करणे क्विप्। "यंसि त्मनमूर्जं न विश्वध क्षरध्यै (ऋ०सं० १,५,५,२)"—इति निगमः॥

(१६) रसः*। व्याख्यातमुदकनामसु। "महे यत् पित्र ईं रसः दिवे कः (ऋ०सं० १,५,१५,५)" इति निगमः॥

(१७) स्वधा†। स्व-शब्दे उपपदे दधातेः (उ०उ०) 'गेहे कः (२,१,१४४)'—इति क-प्रत्ययो बाहुलकाद् भवति। स्वेभ्यो दीयते स्वस्मिन् धीयते वा, स्वेन धनेन धीयते वा। "विश्वा हि माया अवसि स्वधा वः (ऋ०सं ४८,२४,१)"—"आदह स्वधामनु (ऋ०सं० १,१,११,४.)"—इति च निगमौ॥

(१८) अर्कः‡।

(१९) क्षम §। व्याख्यातमुदकनामसु (८५पृ०)। सुविवर्तना-द्दिवि स्वकार्ये स्थिरं भवति, स्थिरो भवत्यनेन भुक्तेन भोक्तेति वा

* पु० १,१२। पृ० ८० पं० ६। निरु० ११,२१।

† पुरस्तात् १,१२। पृ० १३१ पं० ६।

‡ पं० ५०,३,२। निरु० ३,७,६,२२। यद्यपीदं पदं टीकापुस्तके व्याख्यातं न दृश्यते, परमदाक्षिणात्यमहापुरुषाणामन्वयस्य अर्कंगुणकेवलमन्यायाविरोधवदत्संदर्भिति।

§ पुरस्तात् १,१२।

१ २उ २ १ २ ३ १ २
हिंस्यतेऽनेनातिभुक्तेनेति वा 'अहमन्नमन्नमदन्तमद्मि (सा०सं० आ० १,९)"—इति श्रुतिः । माधवपक्षे घदिरशनार्थः (सौ०), अस्यन्ते बुभुक्षितः । "स्वादु सद्मा यो वसतौ स्योनकृत् (?)"—इति निगमः ॥

(२०) नेमः* । 'णीञ् प्रापणे (भ्वा०उ०)' । 'अर्त्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् (उ० १,१३७)' । नयति सुगतिं दातारं, नीयते देवयाचा अनेनेति वा ॥

"नेमा"—इति नकारान्तं केचित् पठन्ति । तदा बाहुलका-दभिधानलक्षणाद्वा नकारस्येत्संज्ञाया अभावः । एवमेवास्मिन् सूत्रे वृत्तिकारेणोक्तम् । यद्वा ; मनिनि रूपसिद्धिः । निगमदर्शनानिर्णयः ॥

(२१) ससम्† । 'षस स्वप्ने (अदा०प०)' । पुंसि संज्ञायां घः प्रायेण (उ ४,११८) । स्वपत्यनेन भुक्तेन, न हि क्षुधितस्याति-निद्रास्ति । "ससेन चिद्विमदायावहो वसु (ऋ०सं० १,४८,२)"—इति निगमः ॥

(२२) नमः । 'णमु प्रह्वत्वे (भ्वा०प०)' । असुन् । उपगतं ज्ञानमात्रेभ्यो भूतेभ्य पूर्वजन्मकृतकर्मवशात्, नम्यते देवतात्वात्, नमयत्येन हेतुना तदस्य प्रयोजनम् च हेतुत्वेन विवक्षा । 'प्र वो महे महि नमो भरध्वम् (ऋ०सं० १,५,१,२)'—"एना वो अग्निं नमसा (ऋ०सं० ५,२,२१,१)"—इति च निगमौ ॥

(२३) आयुः‡ । अन्नं प्राणमस्ति । "पाहि सदमिद् विश्वायुः (ऋ०सं० १,२,२२,३)"—इति निगमः ॥

---

* पु० ३,७६ । निरु० २,२० ।
† पु० ४,२ । निरु० ५,१ ।
‡ पु० २,२ ।

(२४) सूनृता* । व्याख्यातमुदकनामसु (५८ पृ०) । सुष्ठु नयन्ति सुप्रयुक्तान् अर्थान् वा तदर्थिभिः । यद्वा; शोभना नरः सुनरः 'अन्येषामपि दृश्यते (६,३,१३७)'—इति दीर्घः, सूनृषु तायते विस्तीर्यते पुण्येन, 'अन्येषामपि दृश्यते (६,३,१३७)'—इति दीर्घः । वा टाप् । "पुरुणीथे जरते सूनृतावान् (ऋ०सं० १,४,२१,७)"—"अश्विना सूनृतावती (ऋ०सं० १,२,४,१)"—इति च निगमौ ॥

(२५) ब्रह्म † । 'बृहि बृहि वृद्धौ (भ्वा०प०)' । 'बृंहेर्नलोपश्च (उ० ४,१४१)'—इति मनिन् । परिवृद्धं भवति सर्वप्राणिभिः । सर्वदा भुज्यमानमप्यनुपक्षीयमाणत्वात्, स्वभावतो वा परिवृद्धं सर्वस्य जगतो भरणात्, यद्धन्तेऽनेन भूतानीति वा 'अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते (तै०उ० २,२)'—इति श्रुतिः । "उप ब्रह्माणि वाघतः (ऋ०सं० १,१,५,५)" - इति च निगमः ॥

(२६) वर्चः । 'वर्च दीप्तौ (भ्वा०आ०)' । असुन् । दीप्तिकरं खाद्यं शरीरादेः । "तमा संसृज वर्चसा (ऋ०सं० १,२,१२,१)"—"सं माग्ने वर्चसा सृज (ऋ०सं १,२,१२,४)"—"अयुषा सह वर्चसा (ऋ०सं ८,१,२७,४)"—इति निगमाः ॥

(२७) कीलालम् । 'कल गतौ (प०)'चौरादिकः, 'कील बन्धने (भ्वा०प०)', 'कील खण्डने ( ? )' । कील बन्धने इति व्युत्पत्तौ मिलनादर्थः । कील खण्डने इति तु सुच्छेदमित्यर्थः । अपि वा कीला जाठराग्नेर्ज्वाला, तां लाति 'कर्मण्यण् (३.२.१)' । "कीलालपे सोमपृष्ठाय वेधसे (ऋ०सं० ८,४,२२,४)"—इति निगमः ॥

---

* पु० १, ८ । पृ० ५८ प० ४ ।

† प० १० । निरु० १, ८, १०, ११ ।

(२८) यशः* । व्याख्यातमुदकनामसु (१२३पृ०) । यशो यशे-र्दीप्त्यर्थात् । कीर्त्तिकरं वेति माधवः । तदा मत्वर्थः । "यशो न पक्वं मधु गोष्वन्तरा (ऋ०सं० ८,६,२,५)"—"सुविद्युन्न यशस्वता' (ऋ०सं० ३,१,१६,६)"—इति निगमौ ॥

इत्यष्टाविंशतिरन्ननामानि ॥ ७ ॥

आवयति(१) । भर्वति(२) । बभस्ति(३) । वेति(४) । वेवेष्टि(५) । अविष्यन्(६) । वप्सति(७) । भसथः(८) । बब्धाम्(९) । ह्वरति(१०) । इति दशात्तिकर्माणः † ॥ ८ ॥

(१) आवयति ‡ । आङ्पूर्वात् वेतेः (अदा०प०) 'बहुलं छन्दसि (२,४,७३)'—इति शपो लुगभावः । यद्वा ; 'वेञ् तन्तुसन्ताने (उ०)' भ्वादिः ; अनेकार्थत्वात् धातूनामत्तिकर्मत्वम् । एवमन्येष्वपि द्रष्टव्यम् । "आ तु न. स वयति गव्यमश्व्यम् (ऋ०सं० ६,२,२,१०)"—इति निगमः ॥

(२) भर्वति § । 'भर्व हिंसायाम्' भ्वादिः परस्मैपदी । "प्रयुन्यन्नि रंसु यानि भर्वन (ऋ०सं० ४,५,८,२)"—"तेन सुभर्वं शतवत् सहस्रम् (ऋ०सं० ८,५,२०,५)"—इति निगमौ ॥

(३) बभस्ति ‖ । 'भस भर्त्सनदीप्त्योः' जुहोत्यादिः परस्मैपदी । "हरी इवान्धांसि बप्सता (ऋ०सं० १,२,२६,२)'—इति निगमः ॥

---

* पुरस्तात् १, १९ । पृ० १२२ प० ८ ।

(१०) "ह्वयति" ग. C D F. क । † "इत्यत्तिकर्माण" ग ।

‡ प० १४ । निरु० १, १४ १०, २०. ११,१८ ।

§ निरु० ८, २२ । ‖ निरु० ३, १९, १२ ८, २६ ।

(४) वेवेष्टि *। 'विष्लृ व्याप्तौ (जु०उ०)'। 'जुहोत्यादिभ्यः श्लुः (२,४,७५)'। "स्वतैदयोयथातिथि ज्योतिष्कृण्वा परिवेविष्टि-( ? )"—यदा त्वा अतिथयः परिवेष्टि ( ? )"—"मरुतः परिवेष्टारः ( ? )"—इति च निगमाः। 'प्रयोजकव्यापारे प्रयुक्तत्वात् निरूपणीयम् ॥

(५) वेति†। वी गत्यादौ अदादिः परस्मैपदी। "वीतं पातं पयस उस्रियायाः (ऋ०सं० २,२ २२,४)"—इति च निगमः ॥

(६) अविष्यन् ‡। अवतेर्वर्तमाने व्यत्ययेन लृट्; लृटः शता। "दध्यविष्यन्नतसेषु तिष्ठति (ऋ०सं० १.४,२३,२)"—इति निगमः। अत्र च 'अविष्यन्नक्तिकामो भक्षयन्नित्यर्थः'—इति स्कन्दस्वामी। तस्मादविष्यादिति पाठो न युक्तः ॥

(७) बप्सति §। भसेः प्रथमपुरुषे बहुवचने 'घसिभसोर्हलि च (६,४,१००)'—इत्युपधालोपे रूपम्। "दद्भिर्वनानि बप्सति (ऋ०सं० ६,१,२८,१)"—इति निगमः ॥

(८) भसथ ‖। भसेर्लटि थसि 'बहुलं छन्दसि (२,४,७६)'—इति शपः श्लुर्न भवति। "न देवा भसथश्चन (ऋ०सं० ४,८,२५,४)"—इति निगमः ॥

(९) बब्धाम् ¶। भसेर्लोटि तसस्तामि श्लौ द्विर्वचनम्, द्विर्वचनात्परत्वानित्यत्वात् उपधालोपः प्राप्नोति छान्दसत्वात्. 'घसिभसोर्हलि च (६.४,१००)'—इत्युपधालोपः। 'झलि च (८,२,२५)'—इत्यादिसूत्रेषु मिचो लोप इति पक्षे सकारलोपश्छान्दसः सकारमात्रलोप

* पृ० २, ६। पं० १०० प० १६।
† पृ० २, ६। पं० १०० प० ६। ‡ पृ० अत्रैव २। पं० २१९।
§, ‖, ¶, पूर्ववत् अत्रैव २। पं० २१९।

इति पचे 'झलोझलि (८,२,२६)' इति सलोप', भस्वजश्त्वे। बब्धामिति पृथक्पाठे प्रयोजनं मृग्यम्। ० ० ०। "बब्धां ते हरीधाना ( ? )'—इति निगमः॥

(१०) ह्वरति। ह्वृ कौटिल्ये' भूवादिः परस्मैपदी। "अपामतिष्ठद्धरुणह्वरन्तमः (ऋ० सं० १,४,१८,५)"—"उपह्वरे यदुपरा अपिन्वत् (ऋ० सं० १,५,२,१)"—इति निगमौ॥

इति दशाभ्यस्तकर्माणि॥ ८॥

ओजः(१)। वाजः(क) पाजः(२)। शवः(३)। तरः(४)। तवः(५)। त्वक्षः(६)। शर्द्धः(७)। बाधः(८)। नृम्णम्(९)। तविषी(१०)। शुष्मम् (११)। शुष्णम्(१२)। शूषम्(१३)। दक्षः(१४)। वीळु(१५)। च्यौत्नम्(१६)। सहः(१७)। यहः(१८)। वधः(१९)। वर्गः(२०)। वृजनम्(२१)। वृक्(२२)। मज्मना(२३)। पौंस्यानि(२४)। धर्णसि(२५)। द्रविणम्(२६)। स्यन्द्रासः(२७)। शम्बरम्(२८)। इत्यष्टाविंशतिर्बलनामानि॥ ९॥

(१) ओज †। व्याख्यातमुदकनामसु (११९पृ०)। उब्जत्यनेन,

(५) "तव" ख।
(६) "त्वच" क C.D F, छ। (९) "नृम्णम्' इति छ।
(१५) "वीळु" ग.C D F। (१६) "यध"—इति छ।
(२१) "विट्" ग।
(२५) "धर्णसि" ङ च पुस्तकयोरन्यत्र, "धर्णसि"—इति छ।
* "इति चलस" ग। † पुस्तात् १, १२। पृ० ११९ पं० ८।

बलवत्सविधौ हि रुजतो भवन्ति भीत्या, न्यग्भावयत्यनेन वा शत्रून्। वर्त्ततेऽनेन ऐश्वर्यादि, वर्त्तते व्यायामादिना। इमावर्थान्तरावपि, हृदार्थेषु बोद्धव्यौ। 'उर्वधिकम्'—इति माधवः। हिंसन्तेऽनेन शत्रवो वा। 'उपेर्जुट् च'—इति श्रीभोजदेवः। असुनि गुणः। ओषति दहति शत्रून्। "ओजसो जातमुतमन्य एनम् (ऋ०सं० ८, २,४,२)"—"वसूनि जाते जनमान ओजसा (ऋ०सं० ६,७, २,२)"—इति निगमौ ॥

(२) वाजः *। व्याख्यातमन्ननामसु (२११पृ०)। गच्छन्त्यनेन शत्रून् प्रति जिगीषवः। गम्यतेऽधिगम्यते व्यायामादिना यत्नेन। इमावर्थावुत्तरत्रापि गत्यर्थेषु बोद्धव्यौ। 'वाजोबलं, वाजयतेः प्रेरणार्थात्'—इति माधवः। अनेन शत्रून् प्रेरयति विद्रावयतीति। 'परिवाजेषु भूषथः (ऋ०सं० १,१,१२,४)"—इति निगमः ॥

(३) पाजः †। 'पा रक्षणे (अदा०प०)'। 'पातेर्जुट् च'-इत्यसुन् बलेन हिंस्यते सर्वम्। 'कृणुष्व पाजः प्रसितिं न पृथ्वीम् (ऋ० सं० ३,४,२१,१)"—इति निगमः। 'समिद्धस्य रुशददर्शि पाजः (ऋ०सं० ३,८,१२,२)"—इत्यत्र स्कन्दस्वामिना 'पाजो बलम्'—इत्येतावदेवोक्तं न तु बलनामेति वाजशब्दे तु 'परिवाजेषु भूषथः (ऋ०सं० १,१,१२,३)' इत्यत्र बलनामैतदित्युक्तं, 'अत्यं न मिहे वि नयन्ति वाजिनम् (ऋ०सं० १,५,७,१,)'—इत्यत्र, 'अत्यं न वाजं हवनस्यदं रथम् (ऋ०सं० १,४,११,१)' – इत्यादौ च ऋक्भाष्ये वाजशब्दोपरि 'अपि बलनाम'—इत्युच्यते। अतो वाज-

---

* पु० २, ७। पृ० २११ प० ११।

† पु०२, ७। पृ० २११ प० २१।

पांजस्योरुभयोरपि बलनामत्व स्पष्टम्; तत्रैकतमस्य पाठो विद्वद्भिरधीयताम् ॥

(३) अव *। व्याख्यातमुदकनामसु (११८पृ०)। "मा शिम - अवासस्पते (ऋ०सं० १,१,२१,२)"—इति निगमः ॥

(४) तरः। 'तॄ प्लवनतरणयोः (भू०प०)'; असुन्। तरत्यनेन आपदम्। "यावत्तरो मघवन् यावदोजः (ऋ०सं० १,३,३,२)"—इति निगमः ॥

(५) तवः। तवतिर्वृद्ध्यर्थः; असुन्। 'अपादमिन्द्र तवसा जघन्थ (ऋ०सं ३,२ २,३)'—'योगेयोगे तवस्तरम् (ऋ०सं० १,२,२८,२)"—इति च निगमौ ॥

(६) त्वक्षः। 'तक्ष तनूकरणे (भू०प०)'; असुन्। तनूक्रियन्तेऽनेन शत्रवः। "स प्र रिक्वो त्वक्षसा क्ष्मो दिवश्च (ऋ० सं० १,७, १०,५)"—इति निगमः ॥

(७) शर्धः। 'शर्धतिरुत्साहार्थः'—इति स्कन्दस्वामी; असुन्। मनुष्यादावनेन उत्साहितत्वात्। 'अभ्राजि शर्धो मरुतो यदर्णसम् (ऋ०सं० ४,३,१५,३)" – इति निगम ॥

(८) बाधः†। बाधृ विलोडने (भू०आ०); अकर्तरि च कारके सञ्ज्ञायाम् (३,३,१९)'—इति घञ्। बाध्यतेऽनेन शत्रवः। निगमोऽन्वेषणीयः ॥

(९) नृम्णम्‡। 'नृम्णं * * * नॄन् नतम् (निरु० ११,९)'—

---

* पृ० ३, ११ पृ० ११८ प० १२।

† निरु० ८, १३ १०, ९।

‡ प० १०। निरु० १०, १० ११, ९।

इति भाष्यम् । नृन् मनुष्यान् प्रति नमति ; स्वार्थो वा नमिः,नमयति प्रह्वीकरोति'—इति स्कन्दस्वामी। 'इन्द्रे नृम्णं हि ते शवः (ऋ० सं० १,५ २९,३)'—इत्यत्र ऋक्भाष्ये—'यस्माद्बहुभूतानां मनुष्याणामपि नमनकरणं तव बलम्'—इति । स एव तत्र पृषोदरादित्वेन नृ नमन-शब्द य वर्णलोपादौ नृम्णमिति द्रष्टव्यम् । 'यन्नो नृम्णं च रोदसी सपर्यत (ऋ०सं० ८,१,९,१)" "मंहिष्ठवसु-विनृम्णम् (ऋ०सं० १,२,२७,१)"—इति च निगमौ ॥

(१०) तविषी* । तविः सौत्रो धातुर्वृद्ध्यर्थः । तवेष्टिषच् प्रत्ययः । टित्वात् ङीप् । कृणा रजांसि तविषीं दधानः (ऋ०सं० १,१,६,४)"—"युष्माकमस्तु तविषी पनीयसी (ऋ०सं० १,३,१८,२)"—इति निगमौ ॥

(११) शुष्मम्† । 'शुष शोषणे (दि०प०)' । 'इषिसिविसि-शुषिभ्यः किन् (उ० १,१४१)'—इति मन् प्रत्ययः। शुष्यत्यनेनारिः। 'शुषिः शोषणार्थः—इति माधवः। प्रियं हि बलम्। 'शुष्मिति बलनाम शोषयतीति सतः (निरु० २,२४)'—इति भाष्यम्। 'परस्परनायामिकमपि बलं विशेषयति उपशेरतोत्यर्थः'—इति स्कन्दस्वामी। तत्र शोषयतेर्मनिन् 'बहुलमन्यत्रापि संज्ञाछन्दसोः' —इति लुक् । "शुष्मा इन्द्रमवाता अह्रुतप्सवः (ऋ०सं० १,४, १२,४)"—"यस्य शुष्माद्रोदसी अभ्यसेताम् (ऋ०सं० २,६,७,१)" —इति निगमौ ॥

---

* निरु० ९,२२ ।

† निरु० २, २४, २, २१ १०, १० ।

(१२) शुष्णम् * ।

(१३) शूषम् † । 'शुष शोषणे (दि०प०)' । पूषशुषकलुषकाकुषशैलूषादयः'—इत्यादिग्रहणात् 'शुषः प्रत्यूषादयोऽपि भवन्ति'—इति दण्डनाथ-वृत्तिः । अयमव्ययस्थितोपश्च निपात्यते शुष्मवदर्थः । "इन्द्राय शूष मर्चति (ऋ० सं० १,१,१८,५)"—इन्द्रतमः सत्वभिर्यो ह शूषैः (ऋ० सं० २,२,१२,२)"—इति निगमौ ॥

(१४) दक्षः ‡ । 'दक्ष शैघ्र्ये च (भू०आ०)' चकाराद् वृद्धौ । 'दक्ष गतिहिंसनयोः (चु० उ० प०)' । 'दक्षतिरुत्साहार्थः'—इति स्कन्दस्वामी । बलम् । शत्रुविजये क्षिप्रो भवत्यनेन, हिंस्यन्ते वाऽनेन शत्रवः, प्रोत्साहितो वा भवति शत्रुविजये । "मित्रं हुवे पूतदक्षम् (ऋ० सं० १,१,४,२)'—इति भाष्ये स्कन्दस्वामी—'दक्ष इति सकारान्तं बलनाम' । अकारान्तमपि तस्यैवमर्थान्तरे द्रष्टव्यम् । "जज्ञाना पूतदक्षसा (ऋ० सं १,२,८,४)"—इति निगमः ॥

(१५) वीळु । वीळयति संस्तम्भकर्मा । 'भृमृशीङ्तृचरित्सरितनिधनिमिमस्जिभ्य उः (उ० १,७)'—इति उ-प्रत्ययो बाहुलकादस्मादपि भवति । संस्तब्धो दृढो भवत्यनेन, संस्तभ्यन्तेऽनेन शत्रव इति वा । निगमोऽन्वेषणीयः ॥

(१६) च्यौत्नम् । 'च्युङ् गतौ (भू० आ०)' । * * * । च्यावयतिकर्मा वा । च्यवन्ति च्यावयन्ति शत्रूननेन राज्यात् ।

---

* निरु० ३, ११. ५, १६ ६, १८ ।

† ध० ३, ६ ।

‡ निरु० ११२, ३ १९, २६ ॥

"प्रचोदेन मघवा सत्यराधाः (ऋ० सं० ८,१,८,६)"—इति निगमः ॥

(१७) सहः *। 'षह मर्षणे (भ्वा० आ०), छन्दस्यभिभवार्थः। असुन्। सहत्यनेन शत्रून्। "ये सहांसि सहसा सहन्ते (ऋ०सं० ५,१,८,४)"—इति निगमः॥

(१८) यहः †। व्याख्यातमुदकनामसु (११८पृ०)। प्राप्यते आह्रियते वानेन शत्रुः। निगमोऽन्वेषणीयः॥

(१९) वधः ‡। 'हन हिंसागत्योः (भ्वा० प०)। 'हनश्च वधः (३,३,७६)'—इत्यप्। हन्यतेऽनेन शत्रुः। निगमोऽन्वेषणीयः॥

(२०) वर्गः। (२१) वृजनं §। (२२) वृक्। 'वृजी वर्जने (रु० प०)'। घञ्। 'कृपृवृजिमन्दिनिधाञ्भ्यः क्युः (उ० २,७६)', 'क्विप् च (३,२,७६)'। वर्ज्यन्तेऽनेन शत्रवः। "अरंयन्ती वृजनं यद्दीयते (ऋ० सं० १,४,३,५)"—"प्राचीनं वृजनं दोहसे गिरा (ऋ० सं० ४,२,२१,१)"—इति च निगमौ॥ माधवस्तु—'मध्यादःसत्सु वृजन वर्तते बलयुद्धयोः। "वृजनेन वृजिनान्त्संपिपेष (ऋ० सं० ३,२,१६,१)"—"त्वं शश्वा वृजने पृक्ष आणौ (ऋ० सं० १,५,४,२)"—"अरंयन्ती वृजनं (ऋ० सं० १,४,३,५)' तु वर्तते उपद्रवे'—इति। तदान्वेषणीयौ निगमौ॥

(२३) मज्मना। 'टुमस्जो शुद्धौ (तु० प०)। औणादिको मनिन् (उ० ४,१४४)। 'झलां जश् झशि (८,४,५३)', जश्त्वम्.

---

* पु० १, १२। पृ० ११८ पं० ३।

† पु० १, १२। पृ० ११९ पं० १।

‡ पं० २०। § पं० ६, २१। निरु० ३, ८।

तृतीयैकवचनम् । मज्मयति' मज्मन् । "नाभा पृथिव्या भुवनस्य मज्मना (ऋ० सं० २,२,१२,४)"—"स इन्द्रहानि समिथानि मज्मना (ऋ० सं० १,४,१८,५)"—"वि रोदसी मज्मना बाधते शव. (ऋ० सं० १,४,१०,५)"— इति निगमा.। निगमेषु तृतीयैकवचनान्तस्य प्रायशोदर्शनात् तदन्तः पठितः ।

(२४) पौंस्यानि ॥ । 'पुंसि अभिवर्द्धने (प०) चुरादिः । 'मद्गुरादयश्च (उ० ४,१०८)'—इति यत्-प्रत्ययान्तेषु निपातितेषु द्रष्टव्यः । "पौंस्यानि नियुतः सश्चुरिन्द्रम् (ऋ० सं० ४,७,८,३)" —"यस्मिन् विश्वानि पौंस्या (ऋ० सं० १,१,१०,४)"—"मह-न्महच्च पौंस्यम् (ऋ० सं० १,५,३०,५)"— इति निगमा ॥

(२५) धर्णसि । 'धृञ् धारणे (भू० उ०)' । "सानसिवर्णसि-धर्णसि (उ० ४,१०४)"—इत्यसि-प्रत्ययोनुसागमोऽपि निपा-त्यते गुण.। भ्रियतेऽनेन राज्यादि । निगमोऽन्वेषणीय ॥

(२६) द्रविणम् † । द्रु गतौ (भू० प०)' । द्रुदक्षिभ्यामिनन् (उ० २,५२)' । "सनो ददातु द्रविणम् ( ? )"—इति निगम.॥

(२७) स्यन्द्रास । 'स्यदि किञ्चिच्चलने (भू० आ०)' । 'ऋज्र-रन्धसिलिम्पे भ्रपुंड्रगीब्रधीब्रगोरेन्द्राभद्रस्यन्द्रकुलीरादयः'- इति रन्-प्रत्ययान्तो निपात्यते । तस्मात् असेरसुक् (७,१,५०) । स्यन्दतेऽनेन मज्मन् । निगमोऽन्वेषणीयः ॥

---

* प० १७।

† प० १०। निरु० ८,११

(२८) शम्बरम् *। व्याख्यातमुदकनामसु (१३२पृ०)। संभ्रियतेऽनेन शत्रुः, संहणोति वा तत्वत चापदम्। शमनमुपद्रवाणा मुत्कृष्टं च युद्धादौ, शम्बेनेन्द्रेणादीयते वा। बलाधिदैवताऽपीन्द्रः। 'या च का च बलकृतिरिन्द्रकर्मैव तत् (निरु० ७,१०)'— इति भाष्यम् निगमोऽन्वेषणीयः॥

इत्यष्टाविंशतिर्बलनामानि ॥ ९ ॥

मघम्[1]। रेक्णः[2]। रिक्थम्[3]। वेदः[4]। वरिवः[5]। श्वात्रम्[6]। रत्नम्[7]। रयिः[8]। क्षत्रम्[9]। भगः[10]। मीळ्हुम्[11]। गयः[12]। द्युम्नम्[13]। इन्द्रियम्[14]। वसु[15]। रायः[16]। राधः[17]। भोजनम्[18]। तना[19]। नृम्णम्[20]। बन्धुः[21]। मेधा[22]। यशः[23]। ब्रह्म[24]। द्रविणम्[25]। श्रवः[26]। वृत्रम्[27]। ऋतम्[28]। इत्यष्टाविंशतिरेव धननामानि †॥ १० ॥

---

* पु० १, १० । भ० ११९ पं० १६ ।

(११) "मीळ्हम्" क।

(१२) "गयः। युक्षम्। द्युम्नम्"—इति, "तना। बन्धु"—इति च म. C. D F, क।

(२६) इतोऽनन्तरं "श्रवः"—इत्यधिकं म, क।

(२८) "ऋतम्"—इति म. iid। "वित्तम्"—इति च टीकाकृता दृष्टमत्र केषुचित्, पर न तत्प्रकृतम्।

† "इत्यष्टाविंशतिर्धननामानि" च०। "इति धनस्य" म०।

(१) मघम् * । मंहतिर्दानकर्मा (प० ३,२०,१०) । 'घञर्थे क-विधानम् (३,३,५८ वा०)'—इत्यत्र परिगणितस्य प्रायिकत्वात् क-प्रत्यये पृषोदरादित्वात् लोपो हकारस्य घकारश्च । दीयतेऽर्थिभ्यः । "तेभिरिन्द्रं चोदय दातवे मघम् (ऋ०सं० ७,२,२२,५)" —"यदिन्द्र दक्षिणा मघोनी (ऋ० सं० २, ६, ६, ६ )"—इति निगमौ ॥

(२) रेक्णः † । 'रिचिर् विरेचने (रु० उ०)' । 'रिचे र्धने चित् (उ० ४,१८४)'—इत्यसुन्, नुडागमो गुणश्च, चित्वात् 'चजोः कुघिण्यतोः (७,३,५२)'—इति कुत्वम् । 'रेक्ण इति धननाम रिच्यते प्रयतः (निरु० ३,२)'—इति भाष्यम् । रिच्यते अवतिष्ठते प्रयतः म्रियमाणस्य धनं धनिना सह न म्रियत इत्यर्थः । 'रेक्णोधनं रिचेः प्रेरणार्थस्'—इति माधवः । प्रेर्यतेऽनेन हस्तेन भृत्यादिः कर्मसु । "आर्हं यद्रेक्णः परमं वनोषि तत् (ऋ० सं० १,२,१४,४)" "परिषद्यं ह्यरणस्य रेक्णः (ऋ०सं० ५,२,६,२)"—इति च निगमौ ॥

(३) रिक्थम् ‡ । रिचेः (रु०उ०) 'पातृतुदिवचिरिचिसिचिभ्यस्थक् (उ० २,६)'—इति थक् । पूर्ववदर्थः । "न जामये तान्वोरिक्थमारैक् (ऋ० सं० ३,२,५,२)"—इति निगमः ॥

(४) वेदः । 'विद्लृ लाभे (अदा०प०)' । असुन् । विदन्त्येतत्,

---

* निरु० १, ७ ३ १० ३, १६ ।

† निरु० ३, २ ।    ‡ निरु० ३ ८ ।

लभ्यते वाऽनेन धर्मादिः। "होतारं विश्ववेदसम् (ऋ० सं० १,१,२२,१)"—इति निगमः॥

(५) वरिवः। 'वृञ् वरणे (स्वा०उ०)', अस्माद् यङ्लुगन्तात् असुनि बाहुलकादिलोपः। अयं व्रियते, वरिवसो हेतुत्वाद्वा वरिवः 'वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी। एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् (२,१३६)'—इति मनुः। "युधा देवेभ्यो वरिवश्चकर्थ (ऋ० सं० १,४,२५,५)"—"यद्वोराजन् पूर्वे कः (ऋ० सं० १,५,५,२)"—इति निगमौ॥

(६) श्वात्रम् *। आशुशब्द उपपदे 'अत सातत्यगमने (भ्वा०प०)'—इत्यस्मात् 'आदित्यविदश्वि'—इति त्रप्रत्ययः; पृषोदरादित्वेन आशुशब्दस्य व्युत्पत्तिः; यणादेश-सवर्णदीर्घौ। आशु अतति आशु गच्छति, चञ्चलं हि धनम्। निगमोऽन्वेषणीयः॥

(७) रत्नम् †। 'रमु क्रीडायाम् (भ्वा०आ०)', 'रमेस्त च (उ० ३,१४)'—इति न-प्रत्ययस्तकारश्चान्तादेशः। रमणीयं हि तत्। 'रमन्तेऽस्मिन्'—इति क्षीरस्वामी। 'वित्ते रमस्व बहु मन्यमानः'—इति श्रुतिः। "आ रत्नं महि स्थूरं बृहन्तम् (ऋ० सं० ४,६,८,५)"—"होतारं रत्नधातमम् (ऋ० सं० १,१,१,१)"—इति निगमौ॥

(८) रयिः ‡। व्याख्यातमुदकनामसु (१२८पृ०)। गम्यते प्राप्यते पुरुषेण गच्छत्यनेन वृत्तिं भोगसाधनत्वाद्, यद्वा वाऽऽदत्ते,

---

* प० ३, १०. ३, २। निरु० ५, ३।   † निरु० ७, २३।
‡ उ० ६, १२। पृ० १२८ प० ३।

दीयते ऽर्थिभ्य इति वा। 'अग्निना रयिमश्नवत् (ऋ० सं० १, १, १, ३)"—इति निगमः॥

(८) मघम् *। व्याख्यातमुदकनामसु (१२० पृ०)। पूर्वजन्मसुकृतवशेन महति स्थिरं भवति, दत्ताने उपभोगसाधनत्वात्, छिनत्ति दारिद्र्यम्। गतावपि शब्दवदर्थः। अघात् पापात् त्रायते। मघशब्दात् त्रायतेश्च पृषोदरादित्वात् मघम्। धनैरेव पापं नरा निस्तरन्तीत्युच्यते। "न हि ते क्षत्रं न सहो न मन्युम् (ऋ० सं० १,२,१,१)"— "सुमखासो रिशादसः (ऋ० सं० १,१,२६,५)"—इति च निगमौ॥

(१०) भगः †। 'भज सेवायाम् (भू०उ०)'। 'पुंसि संज्ञायां घः प्रायेण (३,३,११८)', 'चजोः कु घिण्ण्यतोः (७,३,५२)'। भज्यते सेव्यते भोगार्थिभिः। यद्वा सेव्यतेऽनेन हेतुना तद्वान्। भगशब्दः पुंलिङ्गोऽधनवचनः। "मित्रास्तोअश्व्यो मातिधग्भगो नः (ऋ० सं० २,६,६,६)"—'यक्षित—ख्योभग ( ? )"—इति निगमौ॥

(११) मीळ्हुम् ‡। 'मिह सेचने (भू०प०)'। * * *। ढत्व-धत्व-ष्टुत्व-ढलोप दीर्घाः, ऋहकार आगमश्च। सिच्यतेऽर्थिभ्योदातृभिः। 'सहस्रमीळ्हुष्टमशिवानमा ?' इत्यत्र भट्टभास्करमिश्रभाष्येऽपि 'मीळ्हु' इति धननाम—इति दृश्यते। ततो निष्कृष्टं उकारान्तनिगमदर्शनाभावात् मकारान्तनिगमदर्शनात्

---

* पु० १, ११। पृ० १२० पं० ८।

† प० ५, ६। निद० १, ० २ १० ६ ११ ८, ११ १२ ११।

‡ प० १०।

उकारान्तादकारान्तयोरपि खोकारोऽस्माकम् । 'रुद्रस्य ये मीळ्हुषः सन्ति पुत्राः (ऋ० सं० ५,४,७,२)" — "तौ वा रुद्रस्य मीळ्हुषः (ऋ० सं० ५,४,२८,५)" इत्यादौ निर्वाहकत्वात् "मीळ्हुषम्" — इति पठितव्यमिति केचिदाहुः । अन्ये तु "मीळ्हः" इति सकारान्तमपि * * * । तेषां मीळ्हांसमिति निर्वाहः । उभयेषामपि "सहस्र मीळ्हे (ऋ०सं० १,७,२४,५)'—इत्यकारान्तस्य पाठोऽपेक्षणीयः । बहुभ्यस्तु निर्णयः ॥

(१२) गय *। व्याख्यातमपत्यनामसु (१८१पृ०) । इदापि तदर्थः । गीयते स्तूयते श्लोकभिः । "अपचहाशुपेगयम् (ऋ० सं० १,५,२९,२)—इति निगमः ॥

(१३) द्युम्नम् †। 'द्युम्नसुम्नमिम्न'—इत्यादिना 'द्युत दीप्तौ (भू०आ०)'—इत्यस्मात् न-प्रत्ययो मकारश्चान्तादेशो निपात्यते । तेन महान् । दीप्यते द्युम्नम् । 'द्यु अभिगमने (अदा० प०)'—इति क्षीरस्वामी । अत्र धातोर्मगागमो निपात्यते । "द्युम्नं सहस्रसातमम् (ऋ० सं० १,१,१८,२)"—"द्युम्ना वाजेभिरागतम् ( ? )" —इति च निगमौ ॥

(१४) इन्द्रियम् । 'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा (५.२.९३)'—इति घ-प्रत्ययान्तमन्तोदात्तं निपात्यते । इन्द्रः—'इदि परमैश्वर्ये (भू०प०)', परमैश्वर्ययुक्त उच्यते । इन्द्रस्य लिङ्गम् । अनेन हि ऐश्वर्ययुक्त इति व्यज्यते । अत्र

* पृ० ५ । पृ० १८१ प० ३ ।

† प० ५, २ । निघ० ३, ९ ।

षडी, समर्थात्; लिङ्गार्थे घञ्। यद्वा; इन्द्रेण दृष्टम् इन्द्रियम्। यद्वा; इन्द्र आत्मा तत्कृतेन शुभाशुभेन कर्मणा सृष्टम्। इन्द्रजुष्टं वा; आत्मना सेवितम्, तद्द्वारेण भोगोत्पत्तेः। इन्द्रदत्तं वा, इन्द्रेण पूर्वकर्मणा वा समुत्पादनम्। सृष्ट-जुष्ट-दत्तार्थेषु तृतीया समर्थात्। 'दक्षिणं पादमवनेनिजेऽस्मिन्‌ इन्द्रियं दधामि (ऐ० ब्रा० ८,५,४)"—इति निगमः॥

(१५) वसुः * दानिनामसु "वस्वो"—इत्यत्र व्याख्यातम्। वस्ते आच्छादयति तिरोभावयति दारिद्र्यम्। * * *। "भद्रं भद्रं वसुनः पूर्व्यं० ति (ऋ० सं० ८, १, ५, १)"—इति निगमः॥

(१६) राय †। 'रा दाने (अदा० प०)'। 'रातेर्डैः (उ० २, ६२)'। अम्। दीयते।ऽर्थिभ्यः; तदेव प्राप्यते वा पूर्वकृतेन पुण्येन। 'घनाघृणः कुविद दत्त रायं. (ऋ० सं० १, ३, १, १)" इति निगमः॥

(१७) राधः ‡। राध साध संसिद्धौ (स्वा० प०)'। असुन्। 'राध्नुवन्ति साध्नुवन्ति धर्मादीन् पुरुषार्थान्'—इति स्कन्दस्वामी। राध्यतेऽनेन धर्मादिरिति वा। राधिर्हिंसार्थोऽपि। हिनस्ति दारिद्र्यम्। 'राध इन्द्र वरेण्यम् (ऋ० सं० १, १, १७, ५)'—'रान्तमो निदामा (ऋ० सं० ४, २, १०, १)" —इति निगमो॥

---

* पृ० १ ख० ३ पृ० ३८ प० ४।
† निघ० २, २ ७, ७।        ‡ निघ० ४, ४ ११, २१।

(१८) भोजनम् *। 'भुज पालनाभ्यवहारयोः (रु॰ प॰)', ल्युट् 'कृत्यल्युटो बहुलम् (३, ३, ११३)' इति। यद्वा; अभिमतार्थं भवति भुज्यते तदर्थिः, भुज्यन्तेऽनेन विषयाः इति वा, पाल्यतेऽनेन वा। "मघूयताम् भरा भोजनानि (ऋ॰ सं॰ ३, ८, १८, ५)" —"मा नः प्रिया भोजनानि प्र मोषीः (ऋ॰ सं॰ १, ७, १८, ३)'—इति निगमौ॥

(१९) तना। 'तनु विस्तारे (त॰ प॰)'। पचाद्यच् (३, १, १३४)। तनोति विस्तारयति त्रिवर्गसाधनं हि धनम्। तृतीयैकवचनस्य 'सुपां सुलुक् (७, १, ३९)'—इत्याकारः। विश्वयन्ते तना गिरा (ऋ॰ सं॰ ६, ३, २५, १)"—"या वो मघू तनाय कम् (ऋ॰ सं॰ १, ३, १९, २)"—इति निगमौ॥

(२०) नृम्णम् †। व्याख्यातं बलनामसु (२२१ पृ॰)। नमति प्रह्वीकरोत्यर्थिभ्यः तद् वसु। 'हस्ते दधानो नृम्णा विश्वानि (ऋ॰ सं॰ १, ५, ११, २)"—इति निगमः॥

(२१) बन्धुः ‡। 'बन्ध बन्धने (क्र्या॰ प॰)'। "शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च'—इति उ-प्रत्ययः बध्नात्यनेन भृत्यादीन्। यद्वा; बन्धुरिव बन्धुः। "अबन्धुना सुश्रवसोपजग्मुषः (ऋ॰ सं॰ १, ४, १६, ४)"—इति निगमः॥

---

* निघ॰ ३, ९।

† पु॰ ३। पृ॰ २२२ प॰ २०। ‡ निघ॰ ३, १।

(२२) मेधा *। 'मिधृ मेधृ सङ्गमे च (भ्वा० उ०)' चकारात् हिंसामेधयोश्च। 'मिधिः सङ्गत्यर्थः'—इति माधवः। घञ्। सङ्गच्छतेऽनेन सर्वं महता, हिंस्यते वा महान् चौरादिभिः 'हन्मि वैवार्थकारणात्'—इति महाभारतम्। यद्वा; मतौ धीयते अर्जयितव्यं रक्षितव्यं दातव्यमिति धनवता बुद्धौ धार्यते। तत्र मति-शब्द उपपदे धातोः 'घञर्थे क-विधानम् (३, ३, ५८ वा०)"—इति कः, पृषोदरादित्वात् (६, ३, १०९) मतिशब्दस्य मे-भावः। मेधाकारं विदथस्य प्रसाधनम् (ऋ० सं० ८, ४, २१, ३)"—इति निगमः॥

(२३) यशः †। व्याख्यातमन्ननामसु (२१९ पृ०)। "उत त्या मे यशसाश्वेतनायै (ऋ० सं० २, १, १, ४)"—इति निगमः॥

(२४) ब्रह्म ‡। व्याख्यातमन्ननामसु (२१८ पृ०)। वर्द्धतेऽनेन धर्मादयः, बृंहकं वा भोगानाम्। "चकार्थं ब्रह्म पृतनासु सह्या (ऋ० सं० २, २, २२, ७)"—इति निगमः॥

(२५) द्रविणम् §। व्याख्यातं बलनामसु (२२० पृ०)। रयिवदर्थः। "तं मा यजन्तं द्रविणं समश्नवे ( ? )"—इति निगमः॥

(२६) अन्धः ‖। व्याख्यातमन्ननामसु (२१२ पृ०)। "अन्धो

* निरु० ३, १९।

† पु० १, १२। पृ० १११ पं० ८।

‡ पु० ७। पृ० २१८ पं० ७।

§ पु० ९। पृ० २२० पं० १७।   ‖ पु० ३। पृ० २१२ पं० १५।

पृथुग्रवौ हुवन (ऋ० सं० १, १, १८, २ )"—"हुवक्ष्णुवा असुरो-वर्हणात्कृतः (ऋ० सं० १, ४, १७, ५ )"—इति निगमौ ॥

(२७) हवम् * । व्याख्यं तं मेघनामसु (७७ पृ० )। आच्छादयति दारिद्र्यम्, आच्छाद्यते वा राजतः करादिभयात्। गत्यर्थं रयिवदर्थः। हवी ब्रह्मवदर्थः। 'हवं पुरुकुत्साय रन्धीः (ऋ० सं० २, ४, १६, २ )"—इति निगमः। अत्र स्कन्दस्वामिना 'हवं धननाम'—इति व्याख्यातत्वात् केषुचित् कोशेषु हवमानमपि "विसम्"—इति न पठनीयम् ॥

(२८) हतम्। 'हन् सम्भक्तौ (भ्वा० प०)'। 'द्युतिभ्यां दीर्घश्च वा (उ० ३, ८७)'—इति चकारस्यानुक्तसमुच्चयार्थत्वात् क्त-प्रत्ययः। सम्भज्यते सर्वैः। "हतधयः सङ्गुरिविश्वादिनः (ऋ० सं० २, ६, २७, १ )"—इति निगमः ॥

इत्यष्टाविंशतिरेव धननामानि ॥ १० ॥

अघ्न्या(१)। उस्रा(२)। उस्रिया(३)। अही(४)। मही(५)। अदितिः(६)। इळा(७)। जगती(८)। शक्करी(९)। इति नव गोनामानि † ॥ ११ ॥

(१) अघ्न्या ‡। 'अहन्तव्या भवतीत्यघ्नीति वा (निरु० ११, ४३)'—इति भाष्यम्। अघस्य दुर्भिक्षादेर्हन्त्री वा अघ-

* उ० १, १०। पृ० ७७ प० १८।
(३) उस्रिया-इति क।  (६) 'अदितिः' ग, क।
† इति श्रयाम्।  ‡ प० ४, ५। निरु० ११, ४३।

त्तया। अव शब्दे भवि वा उपपदे हसेः 'अन्नाद्यय (उ० ४, १०८)'—इति यत्-प्रत्ययान्तं निपात्यते। 'नहि मे अस्त्यघ्ना (ऋ० सं० ६, ७, १२, ४)"—"यवि त्वं मध्रेः विषदानीं (ऋ० सं० २, २, २१, ५)"—इति निगमौ॥

(२) उस्रा *। व्याख्यातं रश्मिनामसु (१८ पृ०)। वसति चीरादि हविरस्याम्। 'उस्रियेति। गो-नामोत्तराविणोऽस्यां भोगा उवेति च'—इति (निरु० ४, १८) भाष्यम्। 'उस्रा-विणोऽस्या भोगास्ते अर्हं स्रवन्ति गच्छन्ति चीरदधिनवनीतधृतेषु'—इति स्कन्दस्वामी। "मयोभू वांतो अभिवातूस्राः (ऋ० सं० ८, ८, २७, १)"—"उस्र. पितेव जारयायि यज्ञैः (ऋ० स० ४, ५, १४, ४)" इति च निगमौ॥

(३) उस्रिया †। उस्र-शब्दात् पृषोदरादित्वेन स्वार्थे घ। अर्थः पूर्ववत्। "अविद्र उस्रिया अनु (ऋ० सं० १, १, ११, ५)"—'समुस्रियाभि र्वावशन्त नरः (ऋ० सं० १, ५, १, २)"—इति च निगमौ॥

(४) अह्नी ‡। अहिशब्दो व्याख्यातो मेघनामसु (७४पृ०) 'कृदिकारात् (४, १, ४५ वा०)'-इति ङीप्। गम्यतेऽनया चीरादि हविः, गम्यते दत्तया पुण्यम्; अंहति गच्छति शृङ्गादिना मनुष्यान्, न हन्तव्या वा। निगमो ऽन्वेषणीय। "ईषेयासो अह्नो रू

* पुरस्तात् १० ३। उ० १८ प० १३।
† निरु० ४, १८।
‡ प० १, १०।

नवारवः (ऋ० सं० ७, ३, २, ३ )"—इति भाष्यं द्रष्टव्यम् ॥

(५) मही *, (६) अदितिः †, (७) इळा ‡ । व्याख्यातानि पृथिवीनामसु (१३-१४-१५ पृ०)। तत्र द्यतेः क्तिनि, द्यति-स्यति (४, ७, ४० )'—इतीत्वे दितिः ; नञ्-समासः । इत्य-दिति-शब्दस्य व्युत्पत्तिः । मह्यते पूज्यते सर्वदेवतात्मकत्वात् उपभोगसाधनत्वाद्वा । मह्यन्तेऽनया देवाः यज्ञ आदीनां हविषां तदायत्तत्वात् । "देवाश्च याभिर्यजते ददाति च ( ? )" —इति श्रुतिः । पुनः पुनः दुह्यमानापि न क्षीयते । न द्यति, अखण्डनीया वा । ईड्यते स्तूयते देवत्वात् दीप्यते वा चारुतया । गम्यते तदर्थिभिरिति वा । 'महीनां पयोसि (य० वा० सं० ४, ३ )"—इति, "अदित एहि सरस्वत्येहि (य० वा० सं० ३८, २)"—इति, "समिद्धो समिळाभिरा (ऋ० सं० १, ४, ५, ६ )"—"इडे रन्ते हव्ये काम्ये (य० वा० सं० ८, ४३ )"—इति च निगमाः ॥

(८) जगती §। मनुष्यनामसु "जगतः"—इत्यत्र व्याख्या-तम् (१८१ पृ०)। अत्र । 'उगितश्च (४, १, ६ )'—इति ङीप् । गम्यते तदर्थिभिः । जगत्या छन्दसा आहार्यत्वाद् आहार्या-हरण्ययोरभेदेन वा जगती । "जगता हि पशवो जगती हि

* पु० १, १ । पृ० १३ पं० १६ ।
† पु० १, १ । पृ० १४ पं० १८ ।
‡ पु० १, ११ पृ० १५ पं० ८ ।
§ पु० १, । पृ० १८१ पं० ८ ।

तामनाहरत् ( ? )"—इति हि ब्राह्मणम् । "आगताः पशवः (ऐ० ब्रा० ४, १, ३ )"—इति च । 'समोपधयोरसेन स रेवतीर्जगतीभिः ( ? )"—इति निगमः * ॥

(९) शक्करी † । व्याख्यातं बाहुनामसु (१९८ पृ०) । शक्नोति क्षीरादिप्रदानेन महान्तं प्रीणयितुं स्पर्शनेन वा पापमपनेतुम् । शक्वरीशब्दसम्बन्धादभेदेन वा शक्वरी । "पशवो वै शक्वर्यः पशूनेवावरुन्धते ( ? )"—इति श्रुतिः । निगमोऽन्वेषणीयः ॥

इति नव गोनामानि ॥ ११ ॥

रेळते(१) । हेळते(२) । भामते(३) । हृणीयते(४) । व्रीणाति(५) । भ्रेषति(६) । दोधति(७) । वनुष्यति(८) । कम्पते(९) । भोजतः(१०) । इति दश क्रुध्यतिकर्माणः ‡ ॥ १२ ॥

(१) रेळते । अयं नैरुक्तो धातुः । 'अरेळता मनसा देवान् गच्छत् ( ? )"—इति निगमः ॥

(२) हेळते । 'हेड़ अनादरे क्रोधे च' भ्वादिरात्मनेपदी । "अहेळमानोररिवां अजाश (ऋ० सं० २, २, २, ४ )"—"अहेळमानो वरुणेह बोधि (ऋ० सं० १, २, १५. १ )"—इति निगमौ ॥

---

* ऋ० सं० ३, २, ५७ ३ दृष्टव्योऽयं निगमः । † पृ० ३ । पृ० १९८ प० ६ ।
(४) "हृणीयते" पाठान्तरेषु सर्वत्र । ‡ "इति क्रोधाः" क ।

(३) भामते। 'भाम क्रोधे' भूवादिरात्मनेपदी। "देव अद्रोघ्ने भामिनेगोः (ऋ० सं० १, ५, २५, १)"—"स्वयशूर्भामो अभिमातिषाहः (ऋ० सं० ८, ३, १८, ॥)"—इति निगमौ॥

(४) हृणीयते। 'हृणीङ् रोषे वैमनस्ये च' कण्ड्वादिः। "पुनः प्रायच्छदहृणीयमानः (ऋ० सं० ८, ६, ७, २)"—"हृणीयमानो अप हि मदैये. (ऋ० सं० ३, ८, १५, २)"—इति निगमौ॥

(५) श्रीणाति। 'श्री भये' क्र्यादिः परस्मैपदी। अनेकार्थत्वात् क्रुध्यतिकर्मा। एवमुत्तरत्रापि। "एनः क्षयत्समसर श्रीणन्ति (ऋ० सं० २. ७, १०, २)"—इति निगमः॥

(६) त्वेषति। 'त्वेषु चलने' भूवादिः स्वरितेत्। निगमोऽन्वेषणीयः॥

(७) दोधति। नैरुक्तोधातुः। "इन्द्रो वृत्रस्य दोधत. (ऋ० सं० १, ५, २८, ५)"—इति निगमः॥

(८) वनुष्यति *। 'वनुष्यतिर्हन्तिकर्मा (निरु० ५, २)'—इयत्र स्कन्दस्वामी– वनोतेः कण्ड्वादिप्रक्षेपात् यक्-प्रत्ययः, तत्संयोगेन च वनुभावो द्रष्टव्यः'—इति। निगमोऽन्वेषणीयः †॥

(९) कम्पते। 'कपि चलने' भूवादिरात्मनेपदी। निगमोऽन्वेषणीयः।

---

* पं० ५, २। निरु० ५, २।

† "दीर्घप्रसद्मनि यो वनुष्यति (ऋ० सं० ५, ६, २. १)"

— इति निगम उपलभ्यते।

(१०) भोजते । 'भुज कौटिल्ये' तुदादिः परस्मैपदी । 'छन्दस्युभयथा (३, ४, ११७)'—इत्यार्द्धधातुकत्वात् गुणः । व्यत्ययेनात्मनेपदम् । निगमोऽन्वेषणीयः * ॥

इति दश क्रुध्यतिकर्माणः ॥ १२ ॥

हेळः(१) । हरः(२) । घृणिः(३) । त्यजः(४) । भामः(५) । रोहः(६) । ह्वरः(७) । तपुषी(८) । जूर्णिः(९) । मन्युः(१०) । व्यथिः(११) । इत्येकादश क्रोधनामानि † ॥ १३ ॥

(१) हेळः । हेळतेः भावे घञ् । "देवस्य हेळोऽव यासिसीष्ठाः (ऋ० सं० १, ४, १२, ४)"—इति निगमः ॥

(२) हरः ‡ । 'हृञ् हरणे ( भू० उ० )' घञ् । हरति सत्यासत्यविवेकं, ह्रियते वाऽनेन पुरुषः स्वयमम् ; दुर्णयोऽस्मरः मन्युः क्रोधः । निगमोऽन्वेषणीयः § ॥

(३) घृणिः ‖ । व्यस्यनामस्य व्याख्यातम् (१६७पृ० ११पं०) । क्षरत्यनेन स्वेदादिः, दीप्यतेऽनेन वा ; क्रुद्धोऽग्निरिव ज्वलति हि

* ऋ० सं० १, ५, १८, १ द्रष्टव्य ।

(१) "घृणि" सर्वेष्व कादिलिपिषु ।

(६) एर्द —इति क ।　　　　(७) "ह्वर" C D F, क ।

† "इति क्रोधस्य" क ।

‡ पृ० १, १७ । पृ० २६७ पं० १० ।

§ का० सं० ८, ७, ६, ५ —ऋ० सं० ८, ८, ११, २—इमौ मन्त्री विचार्यौ ।

‖ पृ० १, ८ । पृ० ६२ पं० ७ ।

प्रसिद्धः । "आहृंणि संसंचावहै (ऋ० सं० ४, ८, २१, १)"—इति निगमः । "मा हृणानस्य ( ऋ० सं० १, २, १६, २ )"—इत्यत्र भाष्ये 'हृणिरिति क्रोधनामसु पाठात् हरति क्रोधार्थोऽपि गम्यते' —इति स्कन्दस्वामी, तत् कथमिति विचिन्त्यम् ॥

(४) त्यजः । 'त्यज हानौ (भू० प०)' । असुन् । त्यज्यते सत्पुरुषैः, त्यज्यन्तेऽनेन प्राणाः इति वा, त्यज्यते वा स्वधर्मः । "क्रुद्धः पापं किन्न कुर्यात् क्रुद्धो हन्यात् गुरूनपि । क्रुद्धः परुषया वाचा नरः साधूनपि क्षिपेत्"—इति हि महाभारतम् । "महश्चिदसि त्यजसो वरूता ( ऋ० सं० २,४,८,१ )"—"किं देवेषु त्यज एनश्चकर्थ (ऋ० सं० ८, १, १४, ७)"—इति निगमौ ॥

(५) भामः । भामतेर्भावे घञ् । यद्वा 'भा दीप्तौ ( अदा० प०)' । 'अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् ( उ० १, १३७ )'—इति मन् । दीप्यते तेन तद्वान् । "देवजुष्टोष्यते भामिनि गीः (ऋ० सं० १, ५, २५, १)"—"स्वयंभूर्भामो अभिमातिषाहः (ऋ० सं० ८, १, १७, ४)"—इति निगमौ ॥

(६) एहः । 'हन हिंसागत्योः (अदा० प०)' असुन् । 'नञि हन एह च (उ० ४, २१८)' इति नञुपपदे विधीयमान एहादेशो बाहुलकात् नञ्-विनापि भवति । "अनेहसस्ते हरिवो अभिष्टौ (ऋ० सं० ८, १, ३०, २)"—इति निगमः ॥

(७) ह्वरः । 'ह्वृ कौटिल्ये (भू० प०)' पत्तिकर्मा च । असुन् । ह्वरति कुटिलो भवत्यनेन अस्ति वा । * * * ॥

(८) तपुषी * । * * * ॥

(९) जूर्णिः †। 'जूर्णिर्जवतेर्वा द्रवतेर्वा जीर्यतेर्वा ‡'—इति भाष्यम् (निरु० ६, ४)। * * *। गच्छत्यनेन दुःखं, लोकगर्हां वा, हिनस्ति परान् वा। निगमोऽन्वेषणीयः §॥

(१०) मन्युः ‖। 'मन ज्ञाने (तना० आ०)'। 'यजिमनिशुन्धिदसिजनिभ्यो युच् (उ० ३,२०)'—इति युच्। बाहुलकादनादेशाभावः। ज्ञायते ख्याप्यतेऽनेन। यद्वा; मन्यतेर्दीप्तिकर्मणो युच्। दीप्यतेऽनेन तद्वान्। "न हि ते क्षत्रं न सहो न मन्युम् (ऋ० सं० १, २, १४, १)"—"मा हृणानस्य मन्यवे (ऋ० सं० १, २, १६, २)"—इति निगमौ॥

(११) व्यथिः। 'व्यथ भयचलनयोः (भ्वा० आ०)'। 'इन् सर्वधातुभ्यः (उ० ४, ११८)'—इति इन्। बिभेत्यस्मात् सज्जनः, चलति यानेन स्वधर्मात्। "पतत्रिभिरश्रमैरव्यथिभिः (ऋ० सं० ५, ५, १६, ७)"—"भवे माकिष्टे व्यथिरा दधर्षीत् (ऋ० सं० ३, ४, २२, ३)"—इति च निगमौ॥

इत्येकादश क्रोधनामानि॥ १३॥

---

* निरु० ६, २ "तपुषि"।

† प० १९; ७, ६। निरु० ६, ४।

‡ मन्त्रिकापुस्तके तु 'जीर्यते वा'—इत्येतस्य स्थाने 'दूणोतेर्वा'—इति दृश्यते।

§ "त्विषा जूर्णिर्न वृषति (ऋ० सं० २, ६, १०, १)"—इत्यसौ निगम इति स्कन्द एव व्याख्येन।

‖ प० २, ७। निरु० १०, २९।

वर्त्तते(१) । चयते(२) । लोटते(३)। लोठते(४)। स्यन्दते(५)। कसति(६) । सर्पति(७) । स्यमति(८) । स्रवति(९) । स्रंसति(१०) । प्लवति(११) । स्रोतति(१२) । ध्वंसति(१३) । वेनति(१४)। मार्ष्टि(१५)। भुरण्यति(१६)। शवति(१७)। कालयति(१८) । पेलयति(१९) । कण्टति(२०) । पिस्यति(२१) । विस्यति(२२)। मिस्यति(२३)। प्रवते(२४) । प्लवते(२५) । च्यवते(२६) । कवते(२७) । गवते(२८) । नवते(२९) । क्षोदति(३०)। नक्षति(३१) । सक्षति(३२) । स्यक्षति(३३) । सचति(३४) । रघ्नति(३५) । तुरीयति(३६) । चतति(३७) । यतति(३८) । गाति(३९) । ह्वयति(४०) । सश्चति(४१)। स्सरति(४२)। रंह-

---

(५) "स्यन्दति" न C. D. F, क ।

(१०) "स्रंसते"—इति पाठश्च क ।

(११) "प्लवति" इह नास्ति, परस्तात् (२८) पाठभेदेन दृश्यते ग. C. D. F.

(१८) "कवते" न. C. D. F, क ।

(२२) इतोऽनन्तरमेव "स्वचति (४०)" न. C. D F ।

(२३) "मिस्यति" न C. D F, क ।

(२४) इतोऽनन्तरम् "चयति"—इत्यधिकम् न. C D. F, क ।

(२७) "चरति (४०)" स्थाने "सरति (४२)" न. C D. F ।

(३९) "गाति (१११)" स्थाने "पतति (११२)" न. C. D. F ।

(४०) "स्वचति" इति नात्र पुरस्तात् (२२), एतस्य स्थाने "चतति (१०)" न. D ।

(४२) गतमिदं पुरस्तात् (१०) न C. F ।

ति(४३)। यतंते(४४)। भ्रमंति(४५)। भ्रजंति(४६)। रजंति(४७)।
लजंति(४८)। चियंति(४९)। घमंति(५०)। मिनाति(५१)।
ऋणवंति(५२)। ऋणोति(५३)। खरंति(५४)। सिसंति(५५)।
विविष्टि(५६)। योषिष्टि(५७)। रिणाति(५८)। रीयते(५९)।
रेजंति(६०)। दृप्यति(६१)। दभ्नोति(६२)। युध्यति(६३)।
धन्वंति(६४)। भरुषति(६५)। भायंति(६६)। सीयते(६७)।

---

(४४) नास्त्येवैतत् ग. C. D. F।

(४६) इतोऽनन्तरमेव "भ्रमति (५०)" ग. C. D F।

(५०) गतमिदं पुरस्तात् (४६) ग. C. D F।

(५१) "मिनोति"—इत्यपि टीकाकारसम्मतम्। एतस्यैव स्थाने "चिनोति" —इति ग. C. D F. क। (५४) "खिसति" F, ख।

(५३), (५४) इह न क एव इमे ग. C. D F।

(५६) "वेविष्टि" ख च. C. D. F। "वेविष्टि" क, ख।

(५७) "योषिष्टि" क, ख।

(५८) "क्षणाति" D. F, ख। इतोऽनन्तरमिह "क्षयति" ग D. F "क्षयति" C. क इहैव "रयति (७८)"—इत्यपि ग. C. D. F।

(६०) "नेदति" ग C. D. F।

(६१) "दभ्यति" ग F, ख। इतोऽनन्तरं "नभ्यति"—इत्यधिकम्।

(६२) "दभ्नोति" ग C. D F, ख।

(६३) "युध्यते ग C. D F, ख।

(६५) "भरुष्यति" ख च टीकादिसम्मतमपि। "भर्वति" ग C. D. F, ख।

(६६) "भलर्षति" ग D. F। "भनवति" C, ख।

(६७) "सीयते' मातिरिक्तपुस्तकेषु।

तक्ति[६८]। दीयति[६९]। ईषति[७०]। फणति[७१]। हन्ति[७२]। अर्दति[७३]। मर्दति[७४]। स्रंसते[७५]। नसते[७६]। हर्यति[७७]। क्ष्मयति[७८]। ईर्त्ते[७९]। ईङ्खते[८०]। व्ययति[८१]। श्वात्रति[८२]। गन्ति[८३]। आगनीगन्ति[८४]। जङ्गन्ति[८५]। जिन्वति[८६]। जसति[८७]। गमति[८८]। भ्रति[८९]। भाति[९०]। भ्रयति[९१]। वहते[९२]। रथर्यति[९३]। जेहते[९४]। यशः-

(६८) "दीयते" ग. C. D. F, ह।    (७१) "क्वथति" C. D. F, ह।
(७२) "हसति" ग. C. D. F।    (७३) "सिसति" ग. C. D. F।
(७४) "मदति" ग. C. D. F।    (७५) "धावति" ग. C. D. F।
(७६) "हम्यति" ग. C. D. F। "हर्यति"—इति ह।
(७७) "ध्यति" ग. C. D. F।
(७८) नास्तिदं पुस्तकात् (६८) ग. C. D. F।
(८०) एतदपि नास्त्येव ग. C. D. F। "ईङ्खति"—इति ह।
(८३) "गनीगन्ति" ग. C. D. F। "आगनीगन्ति"—इत्यपि पुस्तकादर्शे (११२) ग. C. D. F।    (८५) "जङ्गन्ति"—इति ह।
(८६) "जसति" ग C. D. F। "जिन्वति"—इति ह।
(८७) "जमति" ग. C. D. F।
(८८) इतोऽनन्तरम् "मिमति (११)" ग. C. D. F।
(९१) "भुरति" ग. C. D. F। "भ्रयति"—इति ह। इतोऽनन्तरं "शश्वति" ग C. D. F।
(९३) "रथर्यति" ग C. D F, ह। इतोऽनन्तरम् "ईहते" ग. C. D. F।
(९४) "जेहति" ग C, ह। इतोऽनन्तरम्—"वर्दति"। "एति (१२०)"। "चूर्णति"। "चलति (१०१)"। "दलति (१०२)"।

कांति(९५)। चुम्यंति(९६)। म्साति(९७)। वांति(९८)। याति(९९)। द्रुषति(१००)। द्राति(१०१)। दूळति(१०२)। एजंति(१०३)। जमंति(१०४)। जवंति(१०५)। वञ्चंति(१०६)। अनिंति(१०७)। पवंते(१०८)। हन्ति(१०९)। सेधंति(११०)। अगंन्(१११)। अजंगन्(११२)। जिगांति(११३)। पतंति(११४)। द्रुन्वंति(११५)। द्रमंति(११६)। द्रवंति(११७)। वेति(११८)। हन्तात्(११९)। एति(१२०)। जगायात्(१२१)। अयथुः(१२२)। इति द्वाविंशशतं गतिकर्माणः * ॥ १४ ॥

---

(९५) "व कति" ग D, F। "कचति" C, ख।
(९६) "चिम्यति" ख घ, ङ।
(१००) "जायति" ग C D F, ङ।
(१०१) "पतयति" ग C. D. F, ङ।
(१०२), (१०३), (१०४) (१०५) (१०६), (१०७),—इमानीह न सन्ति ग, C. D. F।
(१०८) "प्रवति" D, ङ।
(१११) इतोऽनन्तरम्—"चायमीतनि (८४)"। "याति (९९)" ग C, D F।
(११३) गतमिदं पुरस्तात् पाठभेदेन (९९) ग C D F।
(११५) "वजति" ग C D F।
(११७) "द्रुवति" C D. F। इतोऽनन्तरम्—"द्रुमति (१०२)" ग C D F।
(११९) "इयन्तात्"—इति सर्वत्रैव, पर टीकायामप्राधान्येन स्वीकृतम्।
(१२०) गतमिदं पुरस्तात् (९७) ग C. D F।
(१२२) "अयुयु" ख ङ च। "अयुधु" ग. C. D F, ङ।
* "इति गतिकर्माणः" ग।

अत्र वर्त्तते इत्यादीनां गत्यर्थानां गतिकर्मकत्वं स्कन्धस्वामिना प्रतिपादितम्। अनेकार्थत्वाद्वा गतिकर्मत्वम्। एष्वप्रदर्शितनिगमानां निगमा अन्वेषणीयाः। अनुक्तविकरणानां भ्वादित्वं ज्ञेयम्, अनुक्तौ परस्मैपदित्वञ्च॥

(१) वर्त्तते *। 'वृतु वर्त्तने (भ्वा०)' आत्मनेपदी॥

(२) अयते †। (३) लोटते। (४) लोठते॥

(५) स्यन्दते। 'स्यन्दू प्रस्रवणे (भ्वा०)'। आत्मनेपदी। "स्यन्दन्तां कुल्या विषिताः पुरस्तात् (ऋ० सं० ४, ४, २८, २)"—इति निगमः॥

(६) कसति। 'कस गतौ (अदा० प०)'।

(७) सर्पति‡। 'सृप्लृ गतौ (भ्वा० प०)'। "नमो अस्तु सर्पेभ्यः ( ? )"—"अहिर्न जूर्णामति सर्पति त्वचम् ( ऋ० सं० ७, ३, २०, ४ )"—इति निगमौ॥

(८) स्यमति।

(९) स्रवति। 'स्रु गतौ ( भ्वा० प० )'। "अर्वस्रवेदघशंसो ऽवतरम् (ऋ० सं० १, १, १७, १)"—इति निगमः॥

(१०) स्रंसते 'स्रंसु अवस्रंसने (भ्वा०)' आत्मनेपदी। "जातिमं जातमति स प्र स्रंसते (ऋ० सं० २, ७, ४, १)"—इति निगमः। 'समतिरश्चीनमर्थः'—इति वरदत्तः॥

---

* निघ० ६, ८; १०, ११।

† निघ० ४, २६, ७, ११; ८, ३; ६, १४; ६, ४४; ११, १८; १२, १, १९, २०।

‡ निघ० ६, १७।

(११) अवति *। 'अव रक्षणगत्यादौ (भू० प०)' "प्रावन् वाणीः पुरुहूतं धमन्तीः (ऋ० सं० ३,२,२,५)"—"तं घेदग्निर्वृधावति (ऋ० सं० ६, ५, २६, ४)"—इति निगमौ॥

(१२) श्चोतति †। 'श्चुतिर् क्षरणे (भू० प०)'। "श्चोतन्ति ते वसो स्तोकाः ( ऋ० सं० ३, १, २१, ५)"—इति निगमः॥

(१३) ध्वंसति ‡।

(१४) वेनति §। [illegible]धातुः। "मा प्र द्रेव हरिवो मा वि वेनः ( ऋ० सं० ४, १, २८, २ )"—"नासत्या मा वि वेनतम् (ऋ० सं० ४, ४, १६, २)"—इति निगमौ॥

(१५) मार्ष्टि ‖। 'मृज शुद्धौ' अदादिः। "मृगो न भीमः ( ऋ० सं० २, २, २४, २ )"—"उरावन्तसरिंधे मर्जयन्त (ऋ० सं० ५, ४, ६, ३ )"—इति निगमौ॥

(१६) भुरण्यति ¶। 'भुरण धारणपोषणयोः' कण्ड्वादिः। "भुरण्यन्तं जनाँ अनु (ऋ० सं० १,४,८,१)"—"शुचिर्वा सोमो भुरणावजीगः ( ऋ० सं० ७, ७, २२, १ )"—इति च निगमौ॥

---

* पु० ८। पृ० ११८ प० ६।

† निघ० २, ११।

‡ निघ० ३, ९।

§ पु० ६। पृ० १०७ प० ६।

‖ निघ० १, १०, १२, ३१।

¶ निघ० १२, २९।

(१७) शवति* । 'शव गतौ' । 'शु गतौ'—इति स्कन्दस्वामी । "मा भेम शवसस्पते (ऋ० सं० १, १, २१, २)"—इति निगमः ॥

(१८) कालयति † । 'काल क्षेपे' चुरादिरदन्तः । व्यत्ययेन स्थानिवद्भावाद्वृद्धिः । "तं काले कालमागते यते ( ? ‡ )"—इति निगमः । 'कालः कालयतेर्गतिकर्मणः (निरु० २, २५)'—इति यास्कः ॥

(१९) पेलयति § । 'पेल्ट फेल्ट शेल्ट गतौ ( भ्वा० प० )' । "वयांसि पक्षा गन्धेन पिपीलिकाः प्रमाद ( ? ‖ )"—इति निगमः । 'पिपीलिका पेलतेर्गतिकर्मणः (निरु० ७, १३)'—इति यास्कः ॥

(२०) कण्टति ¶ । 'कटि गतौ (भ्वा० प०)' । "यातुधानेभ्य कण्टकीकारीम् (य० वा० सं० ३०,८)"—इति निगमः । 'कण्टकः कन्तपो वा क्रन्ततेर्वा कण्टतेर्वा स्याद् गतिकर्मणः इति निरुक्तम् (८, १२)' । 'कण्टति पश्यति परान्'—इति स्कन्दस्वामी ॥

---

* पा० १, ५। निरु० ९, २; १, ८; ३, १२।

† निरु० २, २५।

‡ अथ० सं० १९, ५३—५४. सूक्तद्वयं द्रष्टव्यम्। वा० अ० ७, ८, ५. अत्र च।

§ निरु० ७, १३।

‖ ऋ० सं० ७, ६, २१, १-विचार्यं। अथ० सं० ७, ५६, ७ द्रष्टव्य।

¶ निरु० ८, १२।

(२१) पिस्यति । 'पिसृ पेसृ गतौ (भू० प०)' । व्यत्ययेन श्यन् ॥

(२२) विस्यति *। (२३) मिस्यति। "विस प्रेरणे', 'मसी परिमाणे' दिवादिः । मिस्यतीतीकारश्छान्दसः । "इयं शुष्मेभिर्बिसखा इवारुजत् (ऋ० सं० ४, ८, ३०, २)"—इति निगमः । अत्र 'बिस्यतिर्गतिकर्मसु पठ्यते—इति स्कन्दस्वामी । ऋग्भाष्ये—विस्यति मिस्यति इमौ नैरुक्तधातू ॥

(२४) प्रवते †। (२५) प्लवते। (२६) च्यवते। 'च्युङ् ज्युङ् प्रुङ् प्लुङ् क्लुङ् रुङ् गतौ (भू० आ०)'। "अभि प्रवन्त समनेव योषाः (ऋ० सं० ३,८,११,३)"—"तिस्रः पृथिवी-रुपरि प्रवा दिवः (ऋ० सं० १, ३, ५, २)"—इति निगमौ ॥

(२७) कवते ‡। 'कुङ् गतिशोषणयोः ( भू० आ० )'। "नीचीनवारं वरुणः कवन्धम् (ऋ० सं० ४, ४, १०, ३)"—इति निगमः। 'कवतेर्गतिकर्मणः कवन्धमुदकम्'—इति स्कन्दस्वामी ॥

(२८) गवते।

(२९) नवते। 'णु स्तुतौ' अदादिः (प०)। 'बहुलं छन्दसि (२, ४, ७३)'—इति शपो लुगभावः, आत्मनेपदन्तु व्यत्ययेन। 'प्र धेनव उदप्रुतो' नवन्त (ऋ० सं० ५, ४, ८, १)"—इति निगमः ॥

---

* निरु० २, २४।

† निरु० ७, १०।

‡ निरु० ५, २६।

(३०) चोदति। 'चुदिर् सञ्चोदने' रुधादिः, स्वरितेत्। व्यत्ययेन शप्। "चोदन्त आपो रिणते वनानि (ऋ० सं० ४,१, २३, ६)"—इति निगमः॥

(३१) नचति *। 'नच गतौ (भू० प०)'। "शुक्रच्युतो रेणुर्नचत याम् (ऋ० सं० १, ३, ३, ४)"—इति निगमः॥

(३२) सचति †। 'षच समवाये' स्वरितेत् (भू०)। 'सिप् बहुलं लेटि ( ३, १, ३४ )', 'लेटोऽडाटौ ( ३, ४, ९४ )'। नैरुक्तधातुर्वा। "सश्चादिव प्र वंसुरः (ऋ० सं० १, ३, २४, १)"—इति निगमः। 'सश्चतेः सचते वा गतिकर्मणो रूपम्'—इति स्कन्दस्वामी॥

(३३) ब्यचति ‡। ब्यचेर्गतिकर्मणो रूपम्'—इति स्कन्दस्वामी॥

(३४) सचति। सच समवाये (भू० उ०)'। "पश्चिद्वपवाः सचन्ताम् (ऋ० सं० १, २, ६, १)"—"अग्निं विश्वा अभि पृक्षः सचन्ते (ऋ० सं० १,५, १६,२)"—इति निगमौ। सचत्युच्यतीति गतिकर्मसु पाठात्'—इति स्कन्दस्वामी॥

---

* प० १८। निरु० ३, २०; १०, २१।

† प० चवेन १७, ९, २८। निरु० ३, २१; ५. ८; ७, २१; ८, १८; ८, ११; ११, ४८।

‡ प० ४, ३। निरु० ८, ११।

(३५) ऋच्छति । 'ऋ गतिप्रापणयोः (भू० प०)' । 'पाघ्राध्मा (७, ३, ७८)'—इत्यादिसूत्रेण ऋच्छादेशः । "वाचा स्तेनं शरवं ऋच्छन्तु (ऋ० सं० ८, ४, ७, ५)"—इति निगमः ॥

(३६) तुरीयति । नैरुक्तधातुः ॥

(३७) चतति * । 'चते याचने' स्वरितेत् । "दूदाहूरमचीचतम् ( ? )"—इति निगमः । 'चततिर्गत्यर्थे च'—इति भट्टभास्करमिश्रः ॥

(३८) अतति । 'अत सातत्यगमने' । "प्रयन्तु ते समतसि (ऋ० सं० १, २, २८, ४)"—इति निगमः ॥

(३९) गाति † । 'गाङ् गतौ (अदा० आ०)' । व्यत्ययेन परस्मैपदी । "निर्गात्—पूतेव स्वधितिः शुचिर्गात् ( ऋ० सं० ५, २, ४, ४)"—इति निगमः ॥

(४०) इयक्षति ‡ । 'यज पूजायाम्' तुदादिरात्मनेपदी । व्यत्ययेन परस्मैपदम् । 'छन्दस्युभयथा (३, ४, ११७)'—इति हि सार्वधातुकत्वात् णि-लोपः । यजेः सनि वा रूपम् , अभ्यासस्य सम्प्रसारणं व्यत्ययेन । "कुविन्नियक्षसि प्रयज्यो (ऋ० सं० ४, ८, ५, ४)"—इति निगमः । 'गतिकर्मा'—इति हरदत्तः ॥

---

* निरु० ६, ३० ।

† निरु० २, १८ ६, २२ १०, २६ १०, १०, १६ ।

‡ निरु० २, १७ ।

(४१) सचति *। सचतेरेव छान्दसः शप्प्रत्ययः। "असंयन्तो भूरिधारे पयस्वती ( ऋ० सं० ५, १, १४, २ )"—"ऋजीषिणं वृषणं सचतः श्रिये ( ऋ० सं० १, ५, ८, २ )"—इति निगमौ॥

(४२) स्सरति †। 'त्सर छद्मगतौ ( भू० प० )'। "अभि त्सरन्ति धेनुभिः (ऋ० सं० ५, ७, १८, १)"—"यथंत्सरत्सृमत्यं चिकित्वान् (ऋ० सं० १, ५, १५, ५)"—इति निगमौ॥

(४३) रंहति ‡। 'रहि गतौ (भू० प०)'। "सहस्रसाः मेधसाता इव त्मना रंहिः ( ऋ० सं० ८, ८, २६, ३ )"—"पुरोहरिभ्यां वृषभो रथो हि षः (ऋ० सं० १, ४, १०, ३)"—इति निगमौ। 'रथो रंहतेर्गतिकर्मणः (निरु० ९, ११)'—इति भाष्यम्॥

(४४) यतते §। 'यती प्रयत्ने' आत्मनेपदम् (भू०)। "हंसा इव श्रेणिशो यतन्ते (ऋ० सं० २, ३, १२, ५)"—"मित्रं न यातयज्जनम् (ऋ० सं० ६, ७, ११, २)"—इति निगमौ॥

(४५) भ्रमति। 'भ्रमु चलने (भू० प०)'। "भ्रमिरस्यग्निभ्राजा स्त्यानाम् ( ? )"—इति निगमः॥

(४६) भ्रजति‖। 'भ्रज भ्रजि गतौ (भू० प०)'। "भ्राजिरेतस्य

* प० ४, २। निरु० ५, २।
† निरु० ५, १। ‡ निरु० ९, ११।
§ प० १८। निरु० १०, २२।
‖ निरु० १२, २०।

ददृशे न रूपम् (ऋ० सं० २, ३, २२, ४)"—"अहिर्बुध्न्यो नियतं इव भजीमान् (ऋ० सं० १, ५, २७, १)"—इति निगमौ ॥

(४७) रजति *। (४८) लजति †। (४९) चियति‡॥

(५०) धमति §। 'अग्निः सौत्रः'—इति स्कन्दस्वामी। यद्वा; 'ध्मा शब्दाग्निसंयोगयोः (भू० प०)'। पाघ्राध्मास्था (७, ३, ७८)'—इत्यादिना धमादेशः। "ग्रावाणो: पुरुहूतं धमन्तो: (ऋ० सं० ४, २, २, ५)"—"नि.षीमद्भ्यो धमथो निःपषस्थात् (ऋ० सं० ४, १, २०, ४)"—इति निगमौ ॥

(५१) मिनाति ‖। 'मीञ् हिंसायाम्'। 'मीनातेर्निगमे (७, ३, ८१)'—इति ह्रस्वः। "मिनोति"—इति पाठान्तरम्। तत्र 'डु मिञ् प्रक्षेपणे' स्वादिः। "समर्चं रय मविखमिन्वम् (ऋ० सं० २, ८, ६, ३)"इति निगमः। 'मीनातेरेतद्रूपम्, सर्वेषामपि लोके नावगन्तुमशक्यम्'—इति हरदत्तः ॥

(५२) ऋण्वति। 'ऋवि रवि गतौ (भू० प०)'। 'इदितो नुम् धातोः (७, १, ५८)', 'रयेर्मतौ बहुलम् (६, १, ३४ वा०)'—इति बहुलवचनात् सम्प्रसारणम्। "व्यानुषग् वार्या देव ऋण्वति

* प० १, १४

† निरु० ६, ८।

‡ निरु० २, ६, ५, १, ८ १०, १०, ११, १०, १४।

§ प० १८, ३, १४। निरु० ६, २।

‖ प० १८। निरु० ७ २८।

(ऋ० सं० १, ४, २३, ३)"—इति निगमः। 'ऋण्वतिर्गतिकर्मा, अस्तर्थीतिप्यर्थः। विविधं गमयति'—इति स्कन्दस्वामि-भाष्यम्॥

(५३) ऋणोति। 'ऋण गतौ' तनादिः स्वरितेत्। "सञ्ज्ञापूर्वको विधिरनित्यः (प० शे० ८३)"—इति लघूपधगुणाभावः "अभि कृष्णेन रजसा द्यामृणोति (ऋ० सं० १, ३, ७, ४)"—"ऋणो रणो ऋनवयाशाः (ऋ० सं० २, ४, १६, २)"—इति निगमौ। उभयोरपि 'ऋणोतिर्गतिकर्मा'—इति स्कन्दस्वामि-भाष्यम्॥

(५४) स्वरति *। 'स्वृ शब्दोपतापयोः'। "हरी इन्द्रप्रतद्वसू अभिस्वर (ऋ० सं० ६, १, १२, २)"—इति निगमः॥ अत्र 'गतिकर्मा'—इत्युक्तं स्कन्दस्वामी। "अनिमिषं विदथाभि स्वरन्ति (ऋ० सं० २, ३, १८, १)"—इत्यादौ 'गतिकर्मस्वपठितोऽपि गत्यर्थः'—इत्युक्तम्॥

(५५) सिसर्त्ति †। 'ऋ सृ गतौ' जुहोत्यादिः। 'अर्त्तिपिपर्त्योश्च (७, ४, ७७)', 'बहुलं छन्दसि (७, ४, ७८)'—इति अभ्यासस्येत्वम्। "प्र बाहवा सिसृतं जीवसे न (ऋ० सं० ५, ५, ४, ५)"—इति निगमः॥

(५६) विपिष्टि ‡। 'विष्लृ व्याप्तौ' जुहोत्यादिः (उ०)। लेटि सिब्बहुलं लेटि (३, १, ३४)'। "अस्मे संवेविषोरयिम्

* प० १, १३। निरु० ३, १९।
† निरु० १, १८, १०, २१।
‡ निरु० १०, ४६।

(ऋ० सं० ६, ५, २६, १)"—इति निगमः । 'समन्तात् प्रापय'—इति भट्टभास्करमिश्रः ॥

(५७) योपिष्टि । 'युप हिंसायाम् ( भू० प० )' । लेटि सिपि व्यत्ययेन गुणः ॥

(५८) रिणाति * । 'री गतिरेषणयोः' क्र्यादिः स्वादिश्च । "ऋघायमाणो निरिणाति मन्यून् ( ऋ० सं० १, ४, २९, २ )"—"लोपामुद्रा वृषणं नीरिणाति ( ऋ० सं० २, ४, २२, ४ )"—इति निगमौ ॥

(५९) रीयते । 'रीङ् स्रवणे' दिवादिः । "एदु मिन्वं न रीयते (ऋ० सं० १,२,२८,२)"—इति निगमः । 'रीयते रेजतीति गतिकर्मसु पाठात् गत्यर्थः'—इति स्कन्दस्वामि-भाष्यम् ॥

(६०) रेजति † । नैरुक्तधातुः । "हव्यो भय वृषवान् मन्म रेजति ( ऋ० सं० २, १, १७, १ )"—'चलति गच्छतीत्यर्थः'—इति स्कन्दस्वामी ॥

(६१) दध्यति ‡ । 'दध धारणे' स्वादिः । व्यत्ययेन श्यन् । "पथादेवा यो भुवनस्य धाता ( ऋ० सं० २, ८, ४, ५ )"—इति च निगमः ॥

(६२) दभ्नोति § । 'दम्भु दम्भे' स्वादिः ॥

---

* निरु० ६, ५ ।

† निरु० १०, ४२ ।

‡ निरु० १, ७, ९ ।

§ प० १९ । निरु० ५, १२ ।

(६३) युध्यति। 'युध सम्प्रहारे' दिवादिरात्मनेपदी, व्यत्ययेन परस्मैपदो ॥

(६४) धन्वति। 'रिवि रवि धवि गत्यर्थाः (भू० प०)'। "परि सोम प्र धन्वा स्वस्तये (ऋ० सं० ७, २, ३३, ५)"—"न यस्य द्यावापृथिवी न धन्व (ऋ० सं० ८,४,१५,१)"—इति च निगमौ ॥

(६५) मरुयति *। नैरुक्तधातुः। "वि धूममग्ने अरुषं मियेध्य (ऋ० सं० १, ३, ८,४)"—"स्वधारः श्यावी मर्यामरुपन् (ऋ० सं० १, ५, १५,१)"—"प्रतीचोरमेरवपीरजानन् (ऋ० सं० १, ५, १८, १०)"—इत्यादिषु स्वान्तस्थाभिप्रायम्—'मरुयतिर्गतिकर्मा'—इति दृष्टम्। "युञ्जन्ति ब्रध्नमरुषं चरन्तम् (ऋ० सं० १, १, ११, १)"—इत्यादौ द्विवयोः प्रदेशयोः 'मरुष्यतिर्गतिकर्मा'—इत्यपि। उभयथा दृष्टमपि, बहुषु प्रदेशेषु दर्शनात् मरुपतीति पाठोयुक्तः ॥

(६६) चायति। "मामायन्ति ज्ञातेन कर्तेन च (ऋ० सं० ८, १, ५, ३)"—"तमिच्चौशेरायन्ति (ऋ० सं० ६, १, २१, ६)"—इति च निगमौ ॥

(६७) सीयते। 'षिञ् बन्धने' स्वादिः क्र्यादिश्च। व्यत्ययेन श्यन्। "डीयते"—इति पाठान्तरम्। तदा 'डीङ् विहायसा गतौ' दिवादिः। निगमदर्शनाद्विर्णयः ॥

---

* प० १, ३। पु० १, ८. निरु० १२. ७।

(६८) तकति। 'तक हसने (भू० प०)'। "यः शूर्साता परितक्म्ये धने' (ऋ० सं० १, २, ३३, १)"—"अन्योन्यान्मत्सर्गं प्रतक्ते ( ? )" इति निगमौ॥

(६९) दीयति ('दीङ् क्षये' दिवादिः। व्यत्ययेन परस्मैपदम्। "श्येनो न दीयन्नन्वेति पाथः (ऋ० सं० ३, ५, ५,५)"—इति निगमः॥

(७०) ईयति *। "ईय गतिहिंसादानेषु' आत्मनेपदी, व्यत्ययेन परस्मैपदम्। "उग्रानोगा ईयते ह्यर्णावतः (ऋ० सं० ४, ४, २७, २)"—इति निगमः। बहुषु 'ईयतीति गतिकर्मसु पाठात्'—इति स्कन्दस्वामी॥

(७१) फणति †। 'फण गतौ'। "ययामङ्गांस्य न्वापनीफणत् (ऋ० सं० ३, ७, १४, ४)"—इति निगमः॥

(७२) हनति ‡। 'हन हिंसागत्योः' अदादिः। 'बहुलं छन्दसि (२, ४, ७३)'—इति शपोलुग् न भवति। "स' यहनन्त मन्युभिर्जनासः (ऋ० सं० ५, ४, २६, २)"—इति निगमः॥

(७३) अर्दति §। 'अर्द गतौ याचने च'॥

(७४) मर्दति ‖। 'मृद मर्दने'। व्यत्ययेन परस्मैपदम्॥

---

* "ईयते" निरु० ४, २, ६, ८, १०, ११।

† निरु० ३, १८।

‡ निरु० ३, १७, ६, २, ७, २२; ८, १०।

§ "अर्दयति" प० १९।

‖ प० १९। "मृदु" निरु० ९, २।

(७५) सर्सृते *। 'ऋ सृ गतौ' जुहोत्यादिः परस्मैपदी। व्यत्ययेनात्मनेपदम्। पृषोदरादित्वात् (६, ३, १०९) अभ्यासस्य रुगागमः। "प्र सर्स्राते दीर्घमायुः प्रयक्षे (ऋ० सं० २, १, १, १)" —"जातेन जात मति स प्र संसृते (ऋ० सं० २, ७, ४, १)"— इति निगमौ ॥

(७६) नसते †। 'नस कौटिल्ये' आत्मनेपदी। "अश्वोध्वी ते नासिकाभ्याम् (ऋ० सं० ८, ८, २१, १)"—इति निगमः ॥

(७७) हर्यति ‡। 'हर्यं गतिकान्त्योः' ॥

(७८) इयर्ति §। 'ऋ सृ गतौ' जुहोत्यादिः। 'अर्ति-पिपर्त्योश्च (७, ४, ७७)'। "क्रष्टीरियर्त्योजसा (ऋ० सं० १, १, १४, ३)"—इति निगमः ॥

(७९) ईर्ते। 'ईर गतौ कम्पने च' अदादिरात्मनेपदी। "मत्सरासः प्रसुपः साकमीरते (ऋ० सं० ७, २, २२, १)"—इति निगमः ॥

(८०) ईङ्खते। 'ईखि गतौ' (भू०) आत्मनेपदी। "य ईङ्खयन्ति पर्वतान् ( ऋ० सं० १, १, ३७, २)"—इति निगमः। अत्र 'ईङ्खतिर्गतिकर्मा'—इति स्कन्दस्वामि-भाष्यम् ॥

* अत्रैव पृ० [illegible]।
† "नसत" प० ४, १। "नसन्" ७, १७ निरु०।
‡ निरु० ७, १०; ७, १७; ११, १४।
§ निरु० ९, ३।

(८१) ध्ययति । (८२) ध्मायति । एतौ नैरुक्तधातू ॥

(८३) गन्ति * । 'गम्लृ गतौ ( भ्वा० प० )' । व्यत्ययेन शपो लुक् । "अङ्गिरोभि रा गहि यज्ञियेभिः (ऋ० सं० ७,६,१४,५)"—इति निगमः ॥

(८४) आगनीगन्ति† । 'गम्लृ गतौ (भ्वा० प०)' । दाधर्ति-दर्धर्ति (७, ४, ६५) इत्यादिना आङ्पूर्वस्य गमेर्लटि अभ्यासस्य चुत्वाभावो नीगागमश्च निपात्यते । यङ्लुगन्तस्य लटि निपातनाद्रूपसिद्धिः । "वक्ष्यन्ती वेदा गनीगन्ति कर्णम् (ऋ० सं० ५, १, १८, ३)"—इति निगमः ॥

(८५) जङ्गन्ति ‡ । गमेर्यङ्लुकि 'नुगतोऽनुनासिकान्तस्य (७,४,८५)'—इति नुकि च रूपम् । "प्रातर्मक्षू धियावसुर्जगम्यात् (ऋ० सं० १, ४,२४,४)"—इत्यत्र 'जङ्गन्तेर्गतिकर्मणएतद्रूपम्'—इति स्कन्दस्वामि-भाष्यम् ।

(८६) जिन्वन्ति§ । 'इवि जिवि धिवि प्रीणनार्थाः (भ्वा० प०)'॥

---

* "गमधौ" निरु० २, ७ । "जग्मुषः" निरु० १२, ४१ ।
"आगच्छात्" निरु० ४, ५० । "आगम्" निरु० ५, २ ।
"आगत" निरु० १२, ४० । "आ गमाम" निरु० ११, ११ ।
"आजग्मुः" निरु० १२, ४२ । "आगनीगन्ति" निरु० ८, १८ ।
"समग्मत" निरु० १२, २३ । "अग्ग्मान" निरु० ४, १२ ।

† द्रष्टव्यम् पुरस्तादिदेव (८३) ।

‡ पु० द्रष्टव्यमिदेव (८३) ।

§ प० ३, २ । निरु० ६, २२ । "प्रजिन्वोषि" निरु० ११, १० ।

(८७) जसति। 'जसु मोचणे' दिवादिः (प०)। व्यत्ययेन शप्॥

(८८) गमति *। 'गमॢ गतौ (भू० प०)'। लेट्। 'लेटोऽडाटौ (३, ४, ९४)'। बाहुलकात् 'सिब्बहुलं लेटि (३,१,३४)'—इति सिप् न भवति। यद्वा; 'सर्वे विधयश्छन्दसि विकल्प्यन्ते'—इति छत्वाभावः। "त्वा गमन्तु तद्दह शृण्वन्तु ( ऋ० सं० ४, ८, ५, १)"—इति निगमः॥

(८९) प्रति। (९०) भ्राति। (९१) भयति। त्रयोऽपि नैरुक्ताः॥

(९२) वहते†। 'वह प्रापणे' (भू० उ०) स्वरितेत्। "वैश्वानरं मातरिश्वा परावतः ( ऋ० सं० ४, ५, १०, ४ )"—इत्यत्र 'परापूर्वस्य वहतेर्गतिकर्मणः परावच्छब्दः'—इति स्कन्दस्वामी॥

(९३) रथर्यति‡। नैरुक्तधातुः। 'रंहतेर्वा रथो रंहणं गमनम् इच्छतीति क्यचि रथीयतीति प्राप्ते रेफउपजन ईडाभावश्च पृषोदरादित्वात् (६, ३, १०९)'—इति स्कन्दस्वामी। "एष देवो रथर्यति ( ऋ० सं० ६, ७, २०, ५ )"—इति निगमः। माधवभाष्यं द्रष्टव्यम्॥

(९४) जेहते। 'जेह जेह वाह प्रयत्ने' आत्मनेपदी। "ये

* पु० द्रष्टव्यमिहैव (८३)।
† "वह्नि" निघ० ८, १८। "वा वहतु" निघ० ९, ४२; ४१।
"वहतु" निघ० १२, ८; ११। "वह्नि" निघ० १, ४, ६; ८, १।
‡ प० ४, १। निघ० ६, २८।

तोतुपुर्देवता जेहमाना (ऋ० सं० ७,६,१८,४)"—इति निगमः ।
'ओ हाड् गतावित्यस्य रूपम्'—इति स्कन्दस्वामी ॥

(९५) ध्वःकति । (९६) सुम्पतिः* । (९७) स्पाति । (९८) धाति † । (९९) याति ‡ ॥

(१००) इयति § । 'इय गतौ' दिवादिः (प०) । व्यत्ययेन शः । "तत्वास्मभ्यमिषयः शर्म यंसन् (ऋ० सं० ५, १, २१, १)"—इति निगमः ॥ 'इषुरियतेर्गतिकर्मणः' (८,१८)'—इति निरुक्तम् ॥

(१०१) द्राति ‖ । 'द्रा कुत्सितायां गतौ' अदादिः (प०) । येतु यवीमतयो' दस्म दहुः ( ऋ० सं० १, ५, ३, १ )"—इति निगमः ॥

(१०२) दूळति । नैरुक्तधातुः ॥

(१०३) एजति ¶ । 'एजृ कम्पने (भू० प०)' । "यूयेन द्युम्निरेजति (ऋ० सं० १, १, १९, २)"—"यथा समुद्र एजति (ऋ० सं० ४, ४, २०, ३)"—इति निगमौ ॥

(१०४) जमति ** । 'जमु अदने (भू० प०)' । "न जामये

---

* प० ४, २ । निरु० ५, १६ ।
† निरु० २, २४, १, ३, ११, २१ ।
‡ प० ३, १९ । निरु० ९, १, ३, १९ ।
§ निरु० ८, १८, "इषित" ८, ८ ।
‖ निरु० २, २ ।
¶ निरु० ३, १६ ।
** निरु० ३ ६ । "जमत्" पु० ६, १० ।

तान्वोरिक्थ संरेक् ( ऋ० सं० ३, २, ५, २ )"—इति निगमः ।
'जामिर्जमतेर्गतिकर्म्मणः'—इति स्कन्दस्वामी ॥

(१०५) जवति *। 'जु गतौ'—इति चीरस्वामी । "न पातव इन्द्र जुजुर्त्तुं नः (   ?   )"—"विपाट् शुतुद्री पयसा जवेते (ऋ० सं० ३, २, १२, १)"—इति निगमौ ॥

(१०६) वञ्चति । 'वञ्चु गतौ (भू० प०)' । "नमो वञ्चते परिवञ्चते (य० वा० सं० १६, २१)"—इति निगमः ॥

(१०७) अनिति †। 'श्वस प्राणने, अन च (अदा० प०)' । "यत्र मातर्यात्वनिति (   ?   )"—इति निगमः । 'अनितिर्गतिकर्मा—इति माधवः ॥

(१०८) पवते ‡। 'पूङ् पवने' । "नेन्द्राहृते पवते धाम किञ्चन ( ऋ० सं० ७, २, २२, १ )"—"स्रक्वं संशाय पविमिन्द्र तिग्मम् (   ?   )"—इति निगमौ ॥

(१०९) हन्ति §। 'हन हिंसागत्योः' अदादिः (प०) । "नि येन मुष्टिहत्यया (ऋ० सं० १, १, १५, २)"—"यास्य वज्र मधिसानौ जघान ( ऋ० स० १, २, १७, २)"—इति निगमौ ॥

---

* "जवेते" निरु० ९, ३९ ।

† निरु० ११, ४० ।

‡ "पवस्व" ९, २० ।

§ "अघ्नन्तम्' निरु० २, १० ; ७, २२ ; "हन्तोः" ६, २ ; "आहनन्", "उपजिघ्नते" ८, २० ।

(११०) सेघति । 'षिधु गत्याम् (भू० प०)' । "सेधतं द्वेषो भवतं सचा भुवा ( ऋ० सं० १, ३, ५, ५)"—इति निगम ॥

(१११) अगन् *। 'गम्लृ गतौ (भू० प०)' । लुङि तिपि च्लेः 'मन्त्रे घस (२, ४, ८०)'—इति लुकि, 'इतश्च (३ ४,९७)'—'संयोगान्तस्य लोपः (८, २, २३)', 'मोनो धातोः (८, २, ६४)'—इति मकारस्य नकारः । "यदामार्गन् प्रथमजा ऋतस्य (ऋ० सं० ३,३, २१, २)"—इति निगमः ॥

(११२) अजगन् †। गमेर्लुङि 'बहुलं छन्दसि (२,४ ७१)'—इति शपः श्लुः । पूर्ववन्नत्वम् (८, २, ६४) । "यस्मात्तद्रजोगमत्पः (ऋ० सं० ३, १, ५, २)"—इति निगम ॥

(११३) जिगाति ‡। 'गा स्तुतौ ( अदा० प० )' । छन्दसि जुहोत्यादिः । 'अर्तिपिपर्त्योश्च ( ७, ४, ७७ ) 'बहुलं छन्दसि (७, ४, ७८)'—इति अभ्यासस्येत्वम् । "धेना जिगाति दाशुषे' (ऋ० सं० १, १, २, ३)"—इति निगमः । 'जगतीति पाठान्तरम्' —इति स्वामिभाष्यम् ॥

(११४) पतति §। 'पतॢ गतौ (भू० प०)' । "गोभिः सन्नद्धा पतति प्रसूता (ऋ० सं० ५, १, २१, १)"—इति निगमः ॥

(११५) इन्वति ‖। 'इवि गतौ (भू० प०)' । "देवीद्वारो बृहतीर्विश्वमिन्वा (य० वा० स० २८, ३०)"—इति निगमः ॥

---

*, † इहैव पुरस्तात् (८२) ।
‡ इहैव पुरस्तात् (३८) ।
§ "आपतत" निरु० ११, १७ । ‖ प० १८ ।

(११६) द्रमति । 'द्रम हम्म मीमृ गतौ (भू० प०)' । "प्र चन्द्रमास्तिरते दीर्घमायुः (ऋ० सं० ८,३,२३,४)'—इति निगमः । 'चन्द्रमायायं द्रमति'—इति भाष्यम् (निरु० ११, ५) । 'द्रमतिर्गतिकर्मा'—इति स्कन्दस्वामी ॥

(११७) द्रवति * । 'द्रु द्रु गतौ (भू० प०)' । "यत्रा नरः सं च यि च द्रवन्ति (ऋ० सं० ५, १, २१, १)"—इति निगमः ॥

(११८) वेति † । 'वी गतिप्रजननकान्त्यशनखादनेषु' अदादिः । "अपामीवां बाधते वेति सूर्यम्"—"पदं न वेत्योदती (ऋ० सं० १, ४, ४, १)"—इति निगमौ ॥

(११९) हयात् । हयतेर्लोटि तातङि रूपम् । "हयन्तात्"—इति केचित् पठन्ति । तत्र 'हय गतौ ( भू० प० )'—इत्यस्य तातङि तकार उपजनः ॥

(१२०) एति ‡ । 'इ गतौ' अदादिः (प०) । "विचाकश-चन्द्रमा नक्षत्रमेति (ऋ० सं० १, २, १४, ५)"—इति निगमः ।

(१२१) जगायात् § । 'गा स्तुतौ' जुहोत्यादिः (प०) । लिङि 'छन्दस्युभयथा (३, ४, ११७)'—इत्यार्धधातुकत्वेन 'ई हल्यघोः (६, ४, ११३)'—इतीत्वं न भवति । "स्तोगितः पुनरस्तं जगायात् (ऋ० सं० ७, ७, २०, १)"—इति निगमः ॥

---

* निरु० ४, १५ ; १८ ।

† पु० २, ६ ।

‡ पु० १४ ।

§ इहैव पुरस्तात् (१८) ।

(१२२) चयथुः। द्वितीऽयुच् (३, ३, ८८)—इति बाहुलका-द्यतेरथुच् भवति ॥

इति द्वाविंशशतं गतिकर्माणः ॥ १४ ॥

नु[१]। मक्षु[२]। द्रवत्[३]। चोयम्[४]। जीराः[५]। जूर्णीः[६]। शूर्ताः[७]। शूघनासः[८]। शीभम्[९]। तृषु[१०]। तूयम्[११]। तूर्णिः[१२]। अजिरम्[१३]। भुरण्युः[१४]। शु[१५]। आशु[१६]। प्राशुः[१७]। तूतुजिः[१८]। तूतुजानः[१९]। तुज्यमानासः[२०]। अज्राः[२१]। साचिवित्[२२]। द्युगत्[२३]। ताजत्[२४]। तरणिः[२५]। वातरंहा[२६]। इति षड्विंशतिः क्षिप्रनामानि* ॥ १५ ॥

---

(५) "जिरा" ख।

(८) "शघनसो" ख। "शूघना" ग C. D F.। "शूघनास" च।

(१०) "त्रिषु" C। (११) "तोयम्" ग C D F।

(१२) "तूर्णि" ख ग। (१३) "अजिरम्" ख।

(१५) "शु" ग। (१६) "आशु" ख ग. च C D F।

(१७) "प्राशुचित्" ग C. F। "प्रायवित्" D।

(१८) "ऋतुजित्" ग C. D. F।

(१९) "तूतुज्जानास" ग C. D F.।

(२१) "अज्रया" ख।

(२२) "साचीवित्" क च। "साचीवत्" ग।

(२३) "युगत्" ग ud।

* "इति क्षिप्रस्य" ग।

